गीतका छंद—

कीनाशत्रास विनास कर परिहरि पुरातम हरी पिया,
सुत नारि वित्त परिवारि रातो त्यागि अमृत विष पिया ।
यह पाय अवसर खाय वे जमराय जालिम कोपिया,
अब शरन संतन चरन की हरिरामदास घनोपिया ॥५०॥

दोहा— मो मति सम भाषा करी, यह हरिनाम सुदास ।
मूल्यौ संत सुधारि हैं, शरणागत हरिदास ॥१॥

कवित्त— क्या सांमरथ क्या लौंण-गुणि गर्व नहीं मेली,
क्या जोगी भया उदास एक घरि भीख न मेल्ही ।
क्या अन का पडचा दुकाल फूल चवलै नही लीन्हो
क्या बरत भया अलोप दूध गाडर नही दीन्हो ॥
क्या घटी बनराइ अरड की डाली तूटी,
क्या बाजा भया कंसि डाक डैरू की टूटी ।
जिन सिर ज्यासो पूरसी, इन भोलै मति भूलि,
रजब मूद्या ऐक दर, गया सैस दर खूलि ॥१॥

संवत १८६५, मिति भाद्रवा सुद ८ भौमवासरे लिषतं पिवसर मध्ये, वांचै त्यांनै श्रीरांमः श्रीराम ॥ श्रीरांम ॥ श्रीराम ॥ श्रोराम ॥ श्रीरांम ॥ श्रीराम ॥ श्रीराम श्रीरांम ॥ श्रीरांम ॥ श्रीरांम सत्य छै ॥ स्वायंभुव ॥१॥ स्वारोचिष ॥२॥ उत्तम३॥ तामस ॥४॥ रैवत्य ॥५॥ चक्षक ॥६॥ श्राद्धदेव ॥७॥ दक्ष सावर्णि ॥९॥ ब्रह्म सावर्णि ॥१०॥ धर्म सावर्णि ॥११॥ रुद्र सावर्णि ॥१२॥ देव सावर्णि ॥१३॥ रुद्र-सावर्णि ॥१४॥

कवत— भक्त होत जा बंस में सप्त गोत तारै सही
पिता पक्ष चोबिस बीस माता के जांनौ,
षोडस त्रिया प्रवांण द्वादस पुत्री के मांनो ।
एकादस कुल बहन दस भूवा के लेषे,
अष्ट मात कुल बहन वेद सुमृति यूं पेषे ॥
ततबेता तिहू लोक मैं, वेद सुमृति ऐसैं कही ।
भक्त होत जा वश मैं, सप्त गोत तारै सही ॥१॥

वाचै सुणै तिकानै श्रीरांम ॥ श्रीराम ॥ श्रीरांम ॥ श्रीराम ॥ श्रीरांम ॥ श्रीराम बांचिज्यो श्रीराम ॥

## 4717 शिवदत्ताष्टकम्

यैः कृता बहवो यज्ञा नारायणपरायणाः ।
तेषां श्रीशिवदत्तानां पादपद्मं नमाम्यहम् ॥१॥

गणनाथमहेशेषु येषां भक्तिः सुनिश्चला ।
तेषां श्रीशिवदत्तानां पादपद्मं नमाम्यहम् ॥२॥
राजराजेश्वरीध्याने येषां चित्तं स्थिरं सदा ।
तेषां श्रीशिवदत्ताना पादपद्मं नमाम्यहम् ॥३॥
येषां साथश्चिचतुर्वेदाः कण्ठाग्रे च सुभाषिते ।
तेषां श्रीशिवदत्तानां पादपद्मं नमाम्यहम् ॥४॥
येषां दर्शनमात्रेण पापपुञ्जं विनश्यति ।
तेषां श्रीशिवदत्तानां पादपद्मं नमाम्यहम् ॥५॥
येषां ज्ञानस्वरूपाणां कृपादृष्ट्यां धनं भवेत् ।
तेषां श्रीशिवदत्तानां पादपद्मं नमाम्यहम् ॥६॥
परोपकारनिपुणा मन्त्रशास्त्रविशारदाः ।
तेषां श्रीशिवदत्तानां पादपद्मं नमाम्यहम् ॥७॥
उद्धारणे च दीनानां येषां बुद्धिः सदैव हि ।
तेषां श्रीशिवदत्तानां पादपद्मं नमाम्यहम् ॥८॥
अष्टकं शिवदत्तानां कविरामेण निर्मितम् ।
ये पठन्ति नरास्तेषां गृहे लक्ष्मीः स्थिरा भवेत् ॥९॥

## 4731. शिवाष्टकम्

॥ ॐ नेत्रस्वामी जयति ॥

ॐ योऽन्तश्चरन् प्राणमतां हृदब्जे,
ध्वनत्यभीक्ष्णं भ्रमरायमानः ।
अहर्नशं च शब्दादिपरागमुच्चै-
र्नमोऽस्तु चैतन्यशिवाय तस्मै ॥१॥

स्वदीधितीनां करणेश्वरीणां,
चिदर्कमूर्तिः समुदीतिमध्ये ।
ग्रासीकरोत्येष हठात् त्रिलोकी,
नमोऽस्तु चैतन्यशिवाय तस्मै ॥२॥

स्वप्राणवह्निस्त्रिशिखादि भित्त्वा,
विरिञ्चिमुख्यानथ कारणेशान् ।
प्रशान्तकोपः परधाम्न्युदेति,
नमोऽस्तु चैतन्यशिवाय तस्मै ॥३॥

तृतीयनेत्रात्मकमध्यधाम-
विकासवह्निद्रुतपूर्वचन्द्रः ।
योगी समाप्नोत्यमृतेश्वरत्वं,
नमोऽस्तु चैतन्यशिवाय तस्मै ॥४॥

कन्दादिचक्रोदितदेवतानां,
प्रियोऽपि सन् प्राणशिखान्तशायी ।
योऽपानवृत्त्या भजते पुनस्त-
न्नमोऽस्तु चैतन्यशिवाय तस्मै ।।५।।

प्राणात्मिका शक्तिरपानशक्ति-
र्द्वयोर्द्वयोः पूर्णकृशात्मनोर्यः ।
मध्येऽप्यघोरेश उदानमूर्ति-
र्नमोऽस्तु चैतन्यशिवाय तस्मै ।।६।।

एकात्म्यतानोभयतात्मरूपा-
याः कल्पनाः कल्पितदेहभाजः ।
ता श्रन्ति यो मध्यमधाम्न्युदीते
नमोऽस्तु चैतन्यशिवाय तस्मै ।।७।।

कायश्मशानान्तरगो य एष,
कापालिकस्वात्मविमर्शदीप्त्या ।
स्रष्ट्वा चितौ तत्त्वगुणानुदेति,
नमोऽस्तु चैतन्यशिवाय तस्मै ।।८।।

योगेन चैतन्यशिवः स्तुतोऽयं,
शिवाष्टकेनेति शरीरसस्थः ।
तेनाप्य सर्वस्य शिवं करोतु,
शिवः स्वहृन्मध्यमधामधामा ।।९।

इति श्रीयोगराजकृतं शिवाष्टकम् ।।

## 4740 षट्पद्यः

OPENING

।। श्रीकृष्णाय नमः ।। अथ षट्पदी ।।

जयसि रासरसमग्नकलितनिजचरणलग्नजन,
जयसि भग्नमर्यादरहित साधनजीवसुधन ।
जयसि दयाभरभरित चरितचञ्चलितसुगायन,
जयसि मनोगतभावबोधभावुककृतचिन्तन ।।

श्रीवल्लभ गोपीशमुख, सुखसम्पादनकृतिकरण ।
अनायासतारितपतित, सकलसाधुसेवितचरण ।।१।।

विलसति हरिरिह सरसहोलिकासमये रमणीसङ्गे ।
गूढभावसमुदयसवर्द्धितहृदयसमुदिताऽनङ्गे ।।१।।

+ + +

श्रीवल्लभपदयुगकृपयैव हृदा पश्यति हरिदासे ।
तव पूरयतु चिन्तितं सकलं सखिसामयिकविलासे ।।१०।।६८

COLOPHON
।। इति षट्पद्यः ।। शुभमस्तु ।।

षट्पद्यो निम्नरागेषूपनिबद्धाः:—

(१) रामकलि (२) विभास (३) रामकरी (४) धन्याश्री (५) मलार (६) केदार (७) गोडी (८) श्रीराग (९) कल्याण (१०) कर्णाट (११) ईमन (१२) शङ्कराभरणकेदार (१३) भैरव (१४) आसावरी (१५) धन्याश्री धमारि ।

## . सन्तोषत्रिंशिका

OPENING
।। ॐ नमोऽमृतेश्वरभैरवाय महासन्तोषप्रदाय ।।

लोकोत्तरानुभवशर्म्मितपूर्णमान-
स्वानन्दसुन्दरविनिर्म्मलनिर्निमेषा ।
यत्स्फारतः पशुरपीश्वरतां प्रयाति,
सा काऽपि दृग् विजयते गुरुपुङ्गवानाम् ।।१।।

CLOSING
भवमरुभुवि श्रान्तो मोहाय एष मनोध्वगो-
विषमविषयप्रोद्यत्तृष्णानिवेशवशीकृतः ।
शिवपदसुधासिन्धुं दैवादवाप्य स सादरं,
किमपि सुखितो मज्जं मज्जं निमज्जति साम्प्रतम् ।।३०।।

निरावरणचिद्व्योमपरमामृतनिर्भरः ।
नागाभिधो व्यधादेनां चित्तसन्तोषत्रिंशिकाम् ।।३१।।

COLOPHON
इति श्रीमहामाहेश्वराचार्यवर्यश्रीनागार्जुनविपश्चिद्वरविरचिता चित्तसन्तोषत्रिंशिका समाप्ता ।।

## 4782, सावित्र्यष्टकम्

OPENING
।। श्रीगणेशाय नमः ।।

श्रीमन्मन्दसुहास्यपेशलमुखां सुस्निग्धगण्डस्थलां
माणिक्यैः खचितान्तरप्रविलसत्ताटङ्कयुग्मान्विताम् ।
कञ्जाक्षीं कमनीयवेणिनिकरां कारुण्यमूर्त्तिं शिवां,
सावित्रीं सचराचरस्य जननीं वन्दे जगन्मोहिनीम् ।।१।।

झं झं झङ्कृतनूपुरां झटिति सद्भक्तार्तिविद्राविणीं,
काञ्चीकङ्कणमुद्रिकास्वगणितैः सन्मण्डनैर्मण्डिताम् ।
हस्ते पुस्तकधारिणीमभयदामापीनकुम्भस्तनीं,
सावित्रीं सचराचरस्य जननीं वन्दे जगन्मोहिनीम् ।।२।।

विद्युत्कोटिनिभांशुकां प्रविलसन्माणिक्यमालाधरां,
कस्तूरीघनसारचर्चितमहादिव्याङ्गरागद्युतिम् ।
श्रीगौरीपरमाविशक्तिसहितामिन्द्रादिसेवितां,
सावित्री सचराचरस्य जननीं वन्दे जगन्मोहिनीम् ॥३॥
श्रीमत्पुष्करतीर्थराजनिकटे भर्त्रा स्वयं निर्मिते,
रम्भास्वस्थकपित्थनूतप्रमुखैर्दिव्यैद्रु मैर्मण्डिते ।
श्रीमद्रत्नगिरीन्द्रराजिशिखरे वैमानिकैः सेवितां,
वत्री सचराचरस्य जननीं वन्दे जगन्मोहिनीम् ॥४॥
ब्रह्माणी कमलासनस्य दयिता ब्रह्माग्निसंवर्द्धिनीं,
ब्रह्मांकाक्षररूपिणी भगवती भक्तप्रिया भावुकाम् ।
सारासारविभेदिनी समरसां सायुज्यसिद्धिप्रदां,
सावित्रीं सचराचरस्य जननी वन्दे जगन्मोहिनीम् ॥५॥
आदिक्षान्तसमस्तवर्णसहितामानन्दसन्दोहिनीं,
वेदान्तार्थसुबोधिनीं विषयसम्मोहान्धकारापहाम् ।
भ्रूभङ्गाच्च विनिर्मिताण्डशतकां भूयः परां देवतां,
सावित्रीं सचराचरस्य जननी वन्दे जगन्मोहिनीम् ॥६॥
आधारादिसमस्तचक्रनिचये मध्या हि संसेविता-
मानन्दादिचतुर्भुजां त्रिनयनामालस्यनिद्रापहाम् ।
ब्रह्मण्यामभयप्रां (प्रदां) द्विजवरैर्मध्याह्नकालेऽर्चितां,
सावित्रीं सचराचरस्य जननीं वन्दे जगन्मोहिनीम् ॥७॥
वीणापुस्तकमालिकामृतघटैर्देदिम (दीप्त) हस्ताम्बुजां,
विश्वेशादिसमस्तदेवपटलैः संस्तूयमानां मुदा ।
गौराङ्गीं गरुडासनप्रियकरीमञ्जासनस्थां शुभां,
सावित्रीं सचराचरस्य जननीं वन्दे जगन्मोहिनीम् ॥८॥
सावित्र्यष्टकमेतदर्पितमलं तद्दिव्यपादाम्बुजे,
सावित्रीमनुराजकेन ग्रथित दिक्पालवर्णाङ्कितम् ।
श्रीमत्कुम्भजपादपद्मकृपया प्राप्तं परं मुक्तिदं,
जप्त्वावर्ये (कोऽ) पि समस्तक्लेशनिचयैर्मुक्तो भवेन्नान्यथा ॥९॥
इतीदं यतिवर्येण हरिदेवेन कीर्तितम् ।
श्रीमत्कुम्भजपादाब्जकृपया क्षन्तुमर्हा (र्हत) ॥
इति श्रीसावित्री (त्र्य) ष्टकम् ॥

OPENING

## हनुमत्सहस्रनामस्तोत्रम्

॥ श्रीगणेशाय नमः ॥

ऋषय ऊचुः—
ऋषे लोहगिरिं प्राप्तः सीताविरहकातरः ।
भगवान् किंविधो रामस्तत्सर्वं ब्रूहि सत्वरम् ॥१॥

वाल्मीकिरुवाच—

मायामानुषदेहोऽयं तदर्थाग्रे कपीश्वरम् ।
हनूमन्तं जगत्स्वामी बालार्कसमतेजसम् ॥२॥
स सत्वरं समागम्य साष्टाङ्गं प्रणिपत्य च ।
कृताञ्जलिपुटो भूत्वा हनूमान् राममब्रवीत् ॥३॥

+ + +

CLOSING: ॐ हनूमान् श्रीप्रदो वायुपुत्रो रुद्रो न घोरजः ।
अमृत्युर्वीरवीरश्च ग्रामवासो जनाश्रयः ॥१॥
स्मृतिबीजं सुरेशानः संसारभयनाशनः ।
उत्तमश्रीपरीवारः श्रीभूरुग्रश्च कामधुक् ॥१२३॥
इति नाम्नां सहस्रेण स्तुतो रामेण वातभूः ।
उवाच तं प्रसन्नात्मा सन्धायात्मानमव्ययम् ॥१२४॥

+ + +

य इदं पठते नित्यं पाठयेद्वा समाहितः ।
सर्वान् कामानवाप्नोति वायुपुत्रप्रसादतः ॥१३७॥

COLOPHON इति श्रीमद्रामायणे वाल्मीकीये श्रीरामकृतहनुमत्सहस्रनामस्तोत्रं संपूर्णं । छ॥ ॥श्री॥ श्रीरामः प्रीतोऽस्तु ॥ छ॥श्रीः ॥

## 4810. हयग्रीवगुर्वष्टकम्

॥ श्रीहरिः ॥

श्रवणमङ्गलं सर्वसिद्धिदं, विबुधपूजितं ध्येयमद्भुतम् ।
सकलभूसुरवन्दितं विभु, हृदि भजाम्यहं तं गुरुं सदा ॥१॥
चरणपङ्कजं विश्ववन्दितं, सकलविद्ययाऽलङ्कृतं मुखम् ।
त्रिपुरसुन्दरीमन्त्ररञ्जितं, प्रतिदिनं विभु संस्मराम्यहम् ॥२॥
सुरगणान्विता त्रिपुरसुन्दरी, हृदयपङ्कजे यस्य राजते ।
शिरस(स्स)रोरुहं तं(गुरुं), हयग्रीवसंज्ञकं संस्मराम्यहम् ॥३॥
मातृभिर्युतैस्सप्तकोटिभिर्मन्त्रनायकैर्वंदनपङ्कजम् ।
निगमसंयुतं यस्य राजि(ज)ते, यतिवरं गुरुं संस्मराम्यहम् ॥४॥
दीप्यते सदा भालपट्टकं, यस्य भस्मना चन्दनेन वा ।
कषायवाससा दीप्यते वपुर्यस्य तं गुरुं संस्मराम्यहम् ॥५॥
वेणुवृक्षजं दण्डमद्भुतं, वामपाणिना धृतमनूपमम् ।
इतरपाणिना सत्कमण्डलुं, दधतमीश्वरं तं गुरुं भजेत् ॥६॥

भवभयान्विते दुःखसागरे, दुस्तरे जना मज्जिताश्च ये ।
चरणपङ्कज ये भजन्ति वै, मातृणा स्तनं ते पिबन्ति किम् ।।७।।
श्रीगुरोरिद चाष्टकं शुभं, ये  यते पाठयतेऽथवा ।
तस्य सद्गृहे श्रीरमा सदा, तिष्ठतीति सा सर्वमङ्गला ।।८।।

COLOPHON

इति श्रीमद् हयग्रीवानन्दसरस्वतीस्वामिना चरणारविन्दाराधनतत्परेण पौण्डरीक-शिवदत्ताख्येन विरचितं हयग्रीवाष्टकम् । सं० १८६७ आषाढ शु० ७ सोमवार । जोदपुर में जेठू शिरमाली बोमण लिखायो छै ।

## 4823. हिङ्गुलाष्टकम्

ब्रह्मादिदेवैः परिपूजिता या, या जीवभूता सकला प्रजासु ।
या सृष्टिसंहारविधानकर्त्री, तां हींगला (हिङ्गुलां) वै शरणं प्रपद्ये ।।१।।
या सिन्ध (न्धु) देशे सकले शशाङ्के, भूषामणिस्थानकवाश (सि) नी या ।
या जाड्यदारिद्र्यविनाशकर्त्री, तां हिङ्गुलां वै शरणं प्रपद्ये ।।२।।
या सर्वविश्वे जगति प्रसिद्धा, भयातुराणां भयनाशिनी या ।
या भुक्तिमुक्ति (क्ती) रतिप्रीतिवली (ल्ली), तां हिङ्गुलां वै शरणं प्रपद्ये ।।३।।
या सस्मृता चेतसि तत्क्षणाच्च, माङ्गल्यदा शत्रुविनाशिनी या ।
या चित्ति (त) चिन्ताफलदानकर्त्री, ता हिङ्गुला वै शरणं प्रपद्ये ।।४।।
या चर्चिता चन्दनचारुगन्धैर्देवासुरैर्यक्षकपन्नगैर्या ।
या सर्वगा सर्वजनार्तिहन्त्री, तां हिङ्गुला वै शरणं प्रपद्ये ।।५।।
या वाक्प्रदा मूकजने सदैव, कष्टातुराणां कनकप्रदा या ।
या तत्क्षणे च प्रददाति देयं, ता हिङ्गुला वै शरण प्रपद्ये ।।६।।
या दिव्यवाणी प्रददाति रम्यां, या रूपशीलाधिगुणां च कन्याम् ।
या धर्मकामार्थं ददाति मोक्षं, तां हिङ्गुला वै शरण प्रपद्ये ।।७।।
या धर्मलोके सततं प्रणम्या, या स्मर्यते भाग्यवतै (युतै) र्नरैश्च ।
या स्मर्त्तुं कामे फलदानकर्त्री, ता हिङ्गुलां वै शरण प्रपद्ये ।।८।।
इदं स्तुवन् स्तोत्रवरेण्यबन्धं, माङ्गल्यदं शत्रुविनाशन च ।
ये मृत्युलोके सतत स्मरन्ति सर्वाभिलब्धान् प्रददाति तेभ्यः । ९।।
इति हींगलाष्टक (म्) ।

## ।। शङ्कराचार्यकृतं गुरोरष्टकम् ।।

कलत्रं धनं पुत्रपौत्रादिसम्पत्
गृहं बान्धवाः सर्वमेतद्धि जालम् ।
गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्न,
ततः किं, तत. किं, ततः किं, ततः किम् ।।१।।

षडङ्गादिवेदा मुखे शास्त्रविद्या,
कवित्वादिगद्यं सुपद्यं करोति ।।गुरोरंघ्रि० ।।२।।

रमामण्डले भूपभूपालवृन्दैः,
सदा सेवितं यस्य पादारविन्दम् ।।गुरोरंघ्रि० ।।३।।

अनर्घ्यादिरत्नानि युक्तानि सम्यक्-
समालिङ्गिता कामिनी यामिनीषु ।।गुरोरंघ्रि० ।।४।।

स्वदेशेषु धन्यो विदेशेषु मन्यः,
सदाचारमत्तोऽस्वदृत्तो न चान्यः ।।गुरोरंघ्रि० ।।५।।

यशो मेण(घ)दं दिक्षु दानप्रतापात्,
जगद्वस्तु सर्वं करे यत्प्रसादात् ।।गुरोरंघ्रि०।।६।।

अरण्ये निवासः स्वगेहे न कार्यो,
न देहे मनो वर्त्तते मे अनार्ये ।।गुरोरंघ्रि०।।७।।

गुरोरष्टकं यः पठेत् पुण्यदेही,
यतिर्भूपतिर्ब्रह्मचारी च गेही ।
लभेद्वाञ्छितार्थं भवेद् ब्रह्म सौख्यं,
परब्रह्मरूपो भवेदन्तकाले ।।८।।

।। श्रीमच्छङ्कराचार्यविरचित गुरोरष्टकमिति ।।

## 4852. अपराधसुन्दरस्तोत्रं सटीकम्

।। श्रीमन्महागणपतये नमः ।।

OPENING

विश्वेश्वरं नमस्कृत्य सर्वप्रत्ययकारणम् ।
सुन्दरस्यापराधस्य टीकेय लिख्यते मया ।।

वन्दे देवमुमापतिं सुरगुरुं वन्दे जगत्कारणं,
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम् ।
वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रिय
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ।।१।।

आदौ कर्मप्रसंगात् कलयति कलुषं मातृकुक्षौ स्थितस्य,
तन्मूत्रामेध्यमध्ये व्यथयति नितरां जाठरो जातवेदाः ।
यद् यद्वा तत्र दुःखं विषमतिविषमं शक्यते नैव वक्तु,
क्षन्तव्यो मेऽपराधः शिव शिव भो श्रीमहादेव शंभो ।।२।।

वन्दे इति स्फुटार्थः, शं सुखं भवत्यस्मादिति शंभुर्विश्वनाथस्तस्य संबोधने, हे शंभो ! मेऽपराधः क्षतव्य इत्यन्वयः, इतः परमन्यच्छ्रेयो नास्तीति, पुनरपि बहुधा संबोधयति शिवेत्यादिभिः, भो संबोधने, हे शिव ! सुखस्वरूप !, आनन्दं ब्रह्म-विजानीयदिति श्रुतेः, पुनः भो शिव शान्तस्वरूप ! निष्कलंक !, निष्क्रियशांत-

मिति श्रुतेः, पुनः भो शिव परममंगलं, मंगलानां च मंगलमिति श्रुतेः, हे श्रीमहादेव!, श्रयंस्येतो योगिन इति श्रीब्रह्मविद्या । महान् त्रिविधच्छेदशून्यः देवः, देवो द्योतनात्मकः, तदुक्तं द्योतनादेव इत्युक्तः, परमात्मा सनातनः त्रिविधोऽस्य परिच्छेदो महच्छब्देन धार्यते इति ब्रह्मविद्यास्वरूपत्रिविधपरिशून्यप्रकाशेत्यर्थः, उत्तरोत्तरमंत्यचरणस्यैवमेव योजना कर्त्तव्या । अपराधो नैवाहू आदाविति, आदौ कर्मवशान्मातृकुक्षौ गतस्य मम कर्मजन्यकलुषं पापं कर्तुं (?) अर्थान्मां कलयति पीडयति, स्थितमिति पाठे सारार्थः, पश्चात्तस्मिन् कुक्षौ यन्मूत्र पुरीष च तेऽस्मेध्ये (तयोर्मध्ये) स्थित मां मातुर्जाठरो वह्निनितरामतिशयेन व्यथयति, तस्यास्तत्र कुक्षौ यद्दुःखं तत्केन वक्तुं शक्यते, न केनापीत्यर्थः, कथभूतं विषमतिविषमं सर्पादेरपि विषगत्या वषमं कठिन-कठिनमित्यर्थः ॥२॥

CLOSING

चंद्रोद्भासितशेखरे स्मरहरे गंगाधरे शंकरे,
सर्पैर्भूषितकण्ठविवरे नेत्रोत्थवैश्वानरे ।
दन्तित्वक्कृतसुन्दराम्बरधरे त्रैलोक्यसारे हरे,
मोक्षार्थं कुरु चित्तवृत्तिमचलामन्यैस्तु किं कर्मभिः ॥

किं दानेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किं
किं वा पुत्रकलत्रमित्रपशुभिर्देहेन गेहेन किम् ।
शास्वैतत्क्षणभंगुरं सपदिनं त्याज्यं मनो दूरतः
स्वात्मार्थं गुरुवाक्यतो भज भज श्री पार्वतीवल्लभम् ॥

आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं
प्रत्यायान्ति गताः पुनर्न दिवसाः कालो जगद्भक्षकः ।
लक्ष्मीस्तोयतरंगभंगचपला विद्युच्चलं जीवितं
तस्मान् मां शरणागतं शरणद त्वं रक्ष रक्षाधुना ॥

श्रीरामेन्द्रवनशिष्येण रामानन्देन भिक्षुणा ।
सुन्दर्यस्यापराधस्य टीकेयं च कृता शुभा ॥१॥

COLOPHON

श्रीरामानन्दविनिर्मिताऽपराधसुन्दरस्तोत्रव्याख्या समाप्तिमगमत् ।

Post-colophonic

वर्षं १८७ । शांभवे नमः । प्रथम वैशाखे कृष्णपक्षस्य १२ द्वादश्यां भौमवासरे लिपिरिय व्यासज्येष्ठशर्मणो हरिदुर्गवासिनः मुक्त(श)र्मणः पठनार्थम् ।

श्रीकंठेति महेशेति शंकरेति हरेति च ।
महादेवेति रुद्रेति जप जिह्वे निरन्तरम् ॥ श्रीरस्तु ।

## 4853. अर्धनारीनटेश्वरस्तोत्रम्

OPENING

॥श्रीः । चाम्पेयगौरार्द्धशरीरकायै, कर्पूरगौरार्द्धशरीरकाय ।
धम्मिल्लकायै च जटाधराय, नमः शिवायै च नमः शिवाय ॥१॥

CLOSING

शिवशिवाष्टकं पुण्यं यः पठेच्छिवसन्निधौ ।
शिवलोक स प्राप्नोति शिवेन सह मोदति ।।

COLOPHON

इति श्रीशंकराचार्यविरचितं अर्द्धनारीनटेश्वरस्तोत्रं सम्पूर्णम् ।।

## 4857. अवतारस्तवः

श्रीगणेशाय नमः ।। श्रीगुरुभ्यो नमः ।। श्रीश्रीपतये नमः ।।

OPENING

ॐ वाच्यं शशिशुभ्रशेषशयनं शंखं च चक्रं गदां,
पद्मं चापि करैर्दधानमसिताम्भोजद्युतिं श्रीयुतम् ।
कोलाद्यैः परितः स्थितैर्युगकरैः स्वीयावतारैर्वृतं,
शक्राद्यैर्विबुधैः स्तुतं च पुरतः धीश हृदब्जे स्मरेत् ।।१।।

CLOSING

कोलो यज्ञमुनीशदत्तसनका नारायणश्च ध्रुवो,
वैन्यो नाभिसुतो हयास्यशकुलौ कूर्मो नृसिंहो हरिः ।
खर्वो हंसमनू भिषग् भृगुसुतो रामश्च कृष्णः क्रमात्,
व्यासो बुद्धशकल्किषाविति हरीन्वन्दे चतुर्विंशतिम् ।।

COLOPHON

श्रीपर्वणीकरोपाख्यनारायणसुधीकृतः ।
अवतारस्तवो विष्णोर्भूमौ विजयतां सदा ।।
कल्याणं भवतात् सदा । श्रीशार्पणमस्तु ।।

## 4849. अष्टपद्यः

OPENING

निः साधनः जनोद्धारकारणप्रकटीकृतः ।
गोकुलेशस्वरूपः श्रीवल्लभः शरणं मम ।।१।।
भजनानंददानार्थं पुष्टिमार्गप्रकाशकः ।
करुणावरणीयः श्रीवल्लभः शरणं मम ।।२।

CLOSING

जितांभोजपदांभोजः विभूषितवसुंधरः ।
सदा गोवर्द्धनस्थः श्रीवल्लभः शरणं मम ।।८।।
अनन्यस्तन्मना नित्यं पठेद्यः शरणाष्टकम् ।
स लभेत् साधनाभावयुक्तोप्येतत्पदाश्रयम् ।।९।।

COLOPHON

इति श्रीहरिदासोक्तं श्रीवल्लभशरणाष्टकम् ।

## 4863. आनन्दमन्दिरस्तोत्रम्

OPENING

श्री संकटायै नमः ।। श्रीसिद्धेश्वर्यै नमः ।। श्रीविन्ध्यवासिन्यै नमः ।।
।। हरि ॐ ।।
वृंदारकावलिकिरीटमणिप्रकाश-
नीराजिताङ्घ्रियुगला कमलायताक्षी ।

शोणांबरावृततनुर्निजभव्यभूमिः
श्रीसंकटाद्य विकटाऽवतु संकटात्तः ॥१॥

संदर्शनागतसल्लललनाजनाली-
पूजासभाजनविभासितभव्यमूर्तिः ।
तत्पादपद्मवसतां विदुषां नतानां,
श्रीसंकटा भगवती भविकाय भूयात् ॥२॥

त्वत्पादपद्मविनतस्य न तस्य कस्य,
संकष्टसंतपनमस्तमियात् समस्तम् ।
पूर्णेन्दुसुन्दरतराञ्चितचंद्रिकायां
का याति हृत गतिमाशु न वा तमांसि ॥३॥

CLOSING

मानदमन्दिरमिद स्तवनं भवान्याः
स्वानन्दतोऽरचि कवीन्द्रबहादुरेण,
लल्लाख्यदीक्षितवरेण सुधीश्वरेण,
बांघोकरेण चतुरेण मनोहरेण ॥१०३॥

अकपंचाष्टचंन्द्रेब्दे मास्याषाढ़े कुजे तथा ।
षष्ठीदिने शुक्लपक्षे कवीन्द्रेण कृता नुतिः ॥१०४॥

COLOPHON:

इति श्रीचिरंतनमोर्वणीकरोपनाम-कियत्कालाऽऽकलितबांघोकरोपनाम-काशीस्थ-महाराष्ट्रभारद्वाजगोत्रपंडितेन्द्रकवीन्द्रश्रीमच्छोलक्ष्मणदीक्षितपुत्रश्रीकवीन्द्रबहादुर-लल्ला दीक्षितविरचितमानदमदिरस्तवनं सपूर्णतासरम्भिप्रकाशीत् ॥

## 4914. कर्पूरस्तवराजः सटीकः

OPENING (ct.)

॥ श्रीगणेशाय नमः ॥

कर्पूरस्तवराजस्य महाकालकृतस्य च ।
स्फुटार्थं प्रकरोत्येतां व्याख्यां श्रीकृष्णपंडितः ॥

कर्पूरमिति, कर्पूरमिति त्र्यक्षर पदं, मध्यमाक्षर पकार तेन रहितं तथा च अन्त्य-स्वराः तस्यैव लग्न ॐकारस्तेन रहित, तदनन्तरमक्षरं रकारस्तेन सहित कृत्वा ककार-मात्रं रेफमात्र चावशिष्यते तत्तदेव सेन्दु कुर्यात् बिन्दुशिरस्कं कुर्यादित्यर्थः, तत वामाक्षी दीर्घ इकारस्तेन युक्तं कृत्वा क्रींमिति ते बीज त्रिःकृत त्रिरावृत, हे मातः ये जपंति सर्वसिद्धि गताना तेषां जापकानां निजमुखकुहरात् सबंधिनी वाचः सबंधिनो गद्यपद्यमयी वाणी गंगातरंगवदिति युक्ते, हे त्रिपुरहरवधू हे ध्वांत-धाराधररुचिरे, ध्वांतं गाढमिति धाराधरो मेघः अंधकारश्च तद्वत्तयोर्या रुचिः कांतिः तद्वत् रुचिरे यद्वा ध्वांतधाराधर इति । श्यामवर्णो धाराधरः सहस्तेन तुल्येन खड्ग-स्तस्य रुचन्वयः समन्तात् रुचिरे, दैत्यैः सह युद्धकाले तव खड्ग(व)ल्ली स्फुरण-विभ्रमविलासान् असि परमरुचिकृत्या व्यंते इत्यर्थः, यस्योद्धारमुक्तं बीजद्वयमुद्धरति ।

OPENING (w)

श्रीगणेशाय नमः ।।

ॐ कर्पूरं मध्यमान्त्यस्वरपरिरहित सेन्दु वामाक्षियुक्तं,
बीज ते मातरेतत्त्रिपुरहरवधूस्त्रीकृत ये जपन्ति ।
तेषा गद्यानि पद्यानि च मुखकुहरादुल्लसंत्येव वाचः,
स्वच्छंदध्वांतधाराधररुचिरुचिरे सर्वसिद्धि गतानाम् ।। १।।

CLOSING (w.)

श्रीकालिके स्तववरं पठते जपेद्यो, श्रीमत्रराजसहित विभवैकहेतुम् ।
इष्टप्रधानसमये बहुकल्पवृक्षं, शीघ्रं प्रयाति त्रिदिवं स नरो विशिष्टः ।।२२।।

इदं कालिस्तवं स्तोत्रं महाभैरवभूषितं ।
सर्वागमरसाढ्यं देवानामपि दुर्लभम् ।।३ ।

विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ।
पुत्रार्थी लभते पुत्रान् मोक्षार्थी परमं पदम् ।।२४।।

दारिद्र्यान्मुक्तिमाप्नोति कुष्ठव्याधिविनाशिनी ।
कालिकायाः प्रसादेन विमुक्तो नात्र सशयः ।।२५।।

नित्यमेव प्रभावेन यन्मनन्ति च मानवाः ।
वाञ्छा-तीर्थफल सिद्धिः प्राप्यते नात्र सशयः ।।२६।।

जन्मान्तर्यत्कृतं पापं सवत्सर-दिनानि च ।
कालिस्तवप्रसादेन मुच्यते नात्र सशयः ।।२७।।

इद कालीस्तवं स्तोत्रं प्रातः प्रातः पठेत् सदा ।
मुच्यते सर्वपापेभ्यो रुद्रलोकं स गच्छति ।।२८।।

CLOSING (ct.)

कुरंगाक्षीणामिति सुन्दरीणां वृंदं यूथं तं भक्तमनुसरति, कथभूत तत्प्रेक्षातरलं सत् जातानुरागेण चवलमनस्कं त, कुबेरप्रतिनिधिः कुबेरसदृशोऽपि क्षोणीपतिरपि तस्य वशे आज्ञाकारी भवति, तदित्यव्यय तस्येत्यर्थः, कारागारे केलिकलया क्रीडा-लमेन न तु युद्धवादिश्रमेण रिपुः कलयति सेवते स च भवतः श्रुटिः प्रतिजनुः प्रति-जन्म चिरजीवन् देवताप्रसादाधिगतपरमार्थज्ञानेन मुक्तपाशाष्टकतया युक्तो भवति 'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यत' इति स्मृतेः । कालीतत्रे-'बृहस्पतिसमो वाग्मी धनैर्धनपतिर्भवेत् ।' इति

कामतुल्यश्च नारीणां रिपुणां समयोपमः ।
तस्याः पादाम्बुजद्वन्द्व राज्ञां मुकुटभूषणम् ।। इत्यादि

शिवं भूयात्—

COLOPHON

ज्योतिर्विज्जयरामेण निर्मुक्तः कृष्णपंडितः ।
कालीस्तवप्रकीर्णश्च चक्रे स मनुनां मुदे ।।

इति श्रीमहाकालिसंहितायां माहाकालस्वो(द्)गतश्रीकृष्णविरचितायां कर्पूर-स्तवराज. सटीकः समाप्ति पेकाण ।।

## 4928. कालिकाहृदयस्तोत्रम्

OPENING श्रीगणेशाय नमः । अस्य श्रीमहाकालीहृदयस्तोत्रमंत्रस्य श्रीउग्रप्रचण्डभैरव ऋषिः, उष्णिक् छन्दः, श्रीमहाकाली देवता, ककारकामराज बीजं, इच्छाक्रियाज्ञानानंदज्योतिरूपिणी शक्तिः, ॐकार कीलकं, मम सकलकामनासिद्धयर्थे सर्वशत्रुविनाशार्थे श्रीमहाकालीप्रीत्यर्थे जपे विनियोगः ।

ॐ अंगुष्ठाभ्यां नमः । ॐ ऐं तर्जनीभ्यां नमः । ॐ ह्रीं मध्यमाभ्यां नमः । ॐ क्रीं कनिष्ठिकाभ्यां नमः । ॐ हुं करतलकरपृष्ठाभ्यां नमः । ॐ श्रं हृदयाय नमः । ॐ ऐं शिरसे स्वाहा । ॐ ह्री शिखायै वषट् । ॐ हुं अस्त्राय फट्— अथ ध्यानम्—

ॐ ध्यायेत् कालिकां बहुरूपिणी दंष्ट्राकरालीं घोररूपां,
लोलजिह्वां करालवदनां शत्रुविनाशकारिणीम् ।
सकलजनवशीकारिणीं शुष्कमांसां महिषासुरविदारिणीं,
अजनमानववशीकारिणीं कालचक्रनिवारिणीम् ॥

ब्राह्मणक्षत्रियवैश्यशूद्राः सर्वे मोहयति इत्यादि—

CLOSING य यं चिंतयते कामं तं तं प्राप्नोति निश्चितम् ।
अक्षयो जायते सोऽपि न दुःखांतं न विगच्छति ॥
... ... ... ...
राजद्वारे च घोरे च परदेशे प्रवेशनम् ।
महाकाली प्रभावेन सर्वरक्षाकरं नृणाम् ॥

COLOPHON इति श्रीरुद्रयामले उड्डानतंत्रे गौरिकल्पे भैरवी-भैरव-संवादे श्रीकालीहृदयस्तोत्रं सम्पूर्णम् ।

श्रीमहाकाल्यर्पणमस्तु ।।श्रीं।।

## 4931. किङ्कीणिस्तोत्रम्

OPENING श्री गणेशाय नमः ॥ अथ किङ्किणीस्तवः—
किं किं दुःखं सकलजननि क्षीयते न स्मृतायां,
का का कीर्तिः कुलकमलिनि प्राप्यते नार्चितायाम् ।
किं किं सौख्यं सुरवरनुते प्राप्यते नार्थितायां,
कं कं योगं त्वयि वितनुते चित्तमालम्बितायाम् ॥१॥
स्मृता भवभयध्वंसि पूजितासि शुभंकरि ।
स्तुता त्वं वांछितं देवि ददासि करुणापरे ॥२॥

CLOSING अज्ञानाद् वा प्रमादाद् वा वैकल्यात् साधनं विना ।
यन्न्यूनमतिरिक्तं वा तत् सर्वं क्षन्तुमर्हसि ॥१॥
द्रव्यहीनं क्रियाहीनं श्रद्धामंत्रविवर्जितम् ।
तत् सर्वं कृपया देव क्षमस्व त्वं दयानिधे ॥२॥

यन्मया क्रियते कर्म तन्महत् स्वल्पमेव वा ।
तत्सर्वं च जगद्धात्रि क्षंतव्यमयमञ्जलिः ।।

इति किंकिनीस्तोत्रम् ।।

## 4910. कथा मदीया-निरूपणस्तोत्रम्

OPENING

श्रीकृष्णाय नमः ।

कथा इमास्ते कथिता महीयसा ,
..............................
..............................
.............................. ।।१।।

CLOSING

विज्ञानवैराग्यविषयेति प्रोक्तं ।
..........................
..........................
भावोदयान्नान्य इहाऽश्रयोस्ति ।।२१।।

COLOPHON

इति श्रीमद्विट्ठलेश्वरविरचितं कथा मदीयेत्यस्यकानि रूपेण विवरणं स्वतन्त्रं सं० ।।

## 4950. श्रीकृष्णशरणागतिस्तोत्रम्

O ENING

श्रीमते निम्बार्काय नमः ।।

श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।
श्रीकरः श्रीधरः श्रीमान् श्रीकृष्णः शरणं मम ।।१।।

श्रीवृन्दावनचन्द्रः श्रीव्रजेन्द्रकुलचन्द्रमाः ।
श्रीराधाकौमुदीचन्द्रः श्रीकृष्णः शरणं मम ।।२।।

नवगोपकिशोरीन्दुः कोटिकंदर्प्पसुन्दरः ।
सदा राधाकेलितुष्टः श्रीकृष्णः शरणं मम ।।३।।

CLOSING

स्वपदांभोरुहद्वन्द्व-परमप्रेमभक्तिदः ।
महानन्दमयो देवः श्रीकृष्णः शरणं मम ।।२३।।

सर्वमन्यद् विनाप्येकः भक्त्याऽभ्यासेन सर्वदा ।
महास्वांतोदयः स्वामी श्रीकृष्णः शरणं मम । २४।।

श्रीकृष्णशरणागतिस्तोत्रमेतन्निरन्तरम् ।
यः पठेत्तस्य सर्वार्थाः सिद्ध्यन्ते साधनैर्विना ।।२५।।

COLOPHON :

इति श्रीभगवत्-श्रीभट्टविरचितं श्रीकृष्णशरणागतिस्तोत्रं संपूर्णम् ।।

## 4970. गंगालहरी (पीयूषलहरी) भावार्थदीपिकाटीकोपेता

OPENING (ct ) श्रीगणेशाय नमः ।। प्रस्तावना ।। पूर्वी दिल्लीत अकब्बर बादशाहा बब जगन्नाथ म्हणून पंडीत होते त्याणी आपल्या विद्वत्तेनें बादशाहास प्रसन्न करून त्यांच्या कन्येशीं विवाह केला, पुटे कित्येक दिवसानी ते पश्चात्ताप पावले परंतु काशीतील ब्राह्मण शुद्धकरीनां ये स्तव शके १५०० साली गंगेच्या काटा वर बसून त्यरणी तिची स्तुति आरंभि लीते द्वांदस श्लोकस एकयावरी अशा बावन्न पायच्य पांणी चढून सर्वां देखतं त्यास गगे ते आपले दर्शन दिलेंव यवनी सह वर्त्तमान त्यांचा उद्धार केला तीही गंगालहरी वामनकृतटीके सह वर्त्तमान एथे छापिली आहे ।

OPENING (w.) श्रीगगायै नमः ।। श्रीगणेशाय नमः ।।

गुरुं प्रणम्य पीयूषलहर्याः प्राकृतैः पदैः ।
भावार्थदीपिकेयं हि तन्यते बुधतुष्टये ।।१।।

समृद्ध सौभाग्यं सकलवसुधायाः किमपि तन्,
महैश्वर्यं लीलाजनितजगतः खण्डपरशोः ।
श्रुतीना सर्वस्वं सुकृतमथ मूर्त्तं सुमनसां,
सुधासौन्दर्यं ते सलिलमशिव नः शमयतु ।।१।।

OPENING (Ct.)

अशेषाभूती चे विपुलतर सौभाग्य किमपी,
जगाते लीले करि शिवतया भूति पदवी ।
श्रुती ची तत्वोक्ति सुकृत विबुधा चे चि अथवा,
सुधा बधू तू सलिल अमुच्याना सु अ शिवा ।।१।।

CLOSING (w.)

धुने नागेन्दुकृत्तिप्रमथगणमणीश्रेणिनन्दीन्दुमुख्यं
सर्वस्व हारयित्वा स्वमथ पुरभिदि द्राक् पणीकर्त्तुं कामे ।
साकूत हैमवत्या मृदुलहसितया वीक्षितस्तावदम्ब,-
व्यालोल्लासिवल्लहरिनटघटी ताडवं नः पुनातु ।।५१।।

धूती चर्म द्विपाच्या प्रमथ गणमणी नंदि चद्रादि सारी
हारी सामग्रि अम्बा मगपणि अपणा घालुइछी पुरारी
सासंधी स तूते विहसु निनिरवि पार्वती गूढ भावे,
क्रोधो मी नित्य लीला नट विशित ..........।।५१।।

## 4971. गंगालहरी (पीयूषलहरी) स्तोत्रं टीकोपेतम्

श्री गणेशाय नमः ।।

OPENING (Ct.)

पद्मया पद्मनाभेन भवानलभर्जिता नराः ।
शीतलतां सरंतीव गंगाधारेण गंगया ।।१।।

चातको नवजलं जलदतो चक्रवाग् दिवसांते दिननाथं,
निर्धनो धनमिच्छति तथाऽहं दर्शनं तव पद्मनाभ ।।२।।

श्रीगंगाचरितं काव्यं जगन्नाथकृतं मुदा ।
शिष्याणामनुबोधाय क्रियते विशदं मया ।।३।।

प्रथमश्लोके जगन्नाथेन समृद्धपदमिति मंगलार्थमुक्त, इदानीं मुख्यान्वयेनाह समृद्धमिति, हे गंगे तव सकलवसुधायाः, सकला चासौ वसुधा च तस्याः, समृद्धं पूर्णं सौभाग्यं, सुभगस्य भावो यस्मिन् तत्, लीलया भ्रूभगेन जनितं जगत् येन सः तस्य खंडपरशोः शिवस्य तत् किमपि अनिर्वचनीयं श्रुत्यगोचरं, महैश्वयं ईश्वरस्य भावो ऐश्वर्यं महच्च तदैश्वर्यं श्रुतीनां वेदानां सर्वस्वं पवित्रजनकं, शंखासुरोदरस्था वेदा प्रकटीभूताः, गंगासलिलस्पर्शात् पूता अभवन् अतः पवित्राणामपि पवित्रमिति भावः अथ पुनरर्थे सुमनसां देवानां मूर्तं देहधारि सुकृतं पुण्यं सुधाया अमृत सौन्दर्यस्य भावः सोदर्यममृतादपि अधिक मोक्षप्रदत्वादिति भावः ईदृशं सलिलं नोऽस्माकमशिवमकल्याणं जन्ममरणादिमय शमयतु ।

OPENING (w.) श्रीगणेशाय नमः ।।

समृद्धं सौभाग्य सकलवसुधायाः किमपि तन्
महैश्वयं लीलाजनितजगतः खण्डपरशोः ।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्त्तं सुमनसां
सुधासौन्दर्यं ते सलिलमशिव नः शमयतु ।।१।।

CLOSING (ct.) इमां पीयूषलहरीं जगन्नाथेन निर्मितां ।
यः पठेत्तस्य सर्वत्र जायन्ते जयसंपदः ।।५६।।

ॐ नमो श्रीगोपालाय नमो नमः । श्रीकृष्णवासुदेवसंकर्षणाय नमः ।।

गंगालहरीपाठकश्रोतॄणां फलमाह, इमामिति यः पुरुषः इमां गगालहरी पठति तस्य सर्वत्रेह परलोके विजयो भवतीत्यर्थः ।। दीपिकाः १

COLOPHON सप्तैकसवच्छरकेऽभ्रपर्वते वर्षे शुचौ वासितपक्षसंयुते ।

तिथौ नवम्या हिमरश्मिवासरे टीकां चकारोदयराम वै द्विजः ।।१।।

इति श्री गगालहरीकाव्यं सपूर्णम् ।

Post-coloponic मिति फालगुन शुक्ल पक्षे ५ समत १८६४ का लिखितं नग्र जोधपुर मध्ये महाराजाजी श्री यादवदासजी स्वपठनार्थं । श्रीरस्तु—कल्याणमस्तु ।।

यादृश पुस्तक दृष्ट्वा तादृश लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ।।

श्रीकृष्णवासुदेवसंकर्षणाय नमो नमः ।। श्रीकृष्णपरमात्मादेवताय नमो नमः । श्रीविष्णुपरमात्मादेवताय नमो नमः ।। श्रीकृष्णाय नमः ।

## 4972 गंगालहरी (पीयूषलहरी)स्तोत्रं टीकोपेतम्

OPENING श्रीगणेशाय नमः ।।

ज्ञानानंदमयं देवं निर्मल स्फटिकाकृतिम् ।
आधारं सर्वविद्याना हयग्रीवमुपास्महे ।।

समृद्धमिति, हे गंगे ते सलिलं नः अस्माकं अशिवं शमयतु, कीदृशं सलिलं सकल-वसुधायाः सौभाग्य, कीदृशं सौभाग्यं समृद्धं, पुनः कीदृशं सलिलं जनितजगतः खंड-परशोः किमप्यनिर्वचनीयं महैश्वर्यं लीला या श्रुतीनां सर्वस्वं, अथ पुनः कीदृशं सलिलं सुमनसां मूर्त्तं सुकृत शोभनं मनो येषां ते सुमनसः तेषां पुनः कीदृशं सलिलं सुधा सौन्दर्यं यस्य तत् सुधासौन्दर्यम् ॥१॥

समृद्धं सौभाग्य सकलवसुधायाः किमपि तन्,

॥१॥ इत्यादि

इमां पीयूषलहरीं जगन्नाथेन निर्मितां ।
यः पठेत्तस्य सर्वत्र जायन्ते जयसंपदः ॥५३॥

CLOSING

इमामिति जगन्नाथेन कृतां इमा पीयूषलहरिं यः कश्चित् पुरुषः पठेत्तस्य सर्व-स्थाने जयसंपदः जायन्ते ।

येस्त्वं दृष्टा तैर्न दृष्टः कृतांतो, येस्त्वं पीता तैर्न पीतं स्तनांमः ।
ये त्वयि मग्नास्तैर्न मग्नं भवाब्धौ, मातर्गंगे यैर्मृतं नो मृतं तैः ॥५३॥

इति श्रीपंडितजगन्नाथत्रिशूलीकृतगंगालहरी संपूर्णा ॥

COLOPHON

इति श्रीगंगालहरी टीका पं० जगन्नाथत्रिशूलीकृत सम्पूर्णम् । संवत् १६०५ वैशाख सुद एकादश्यां । शनि दिने लिष । पुष्करण मध्ये । व्यास छोगालाल भ्रात कनिष्ठ शिवाय लिखितम् ॥

## 4973. पीयूषलहरी बालविबोधिनीटीकोपेता

OPENING

श्रीगणेशाय नमः ॥

भागीरथी त्रिदशसेवितपादपद्मा
अब्जाभयामृतकरीरवराढ्यहस्ता ।
मुक्ताविभूषणविराजितचारुदेहा
पापं विनाशयतु मे सुकृतप्रवाहा ॥१॥

दुर्गाराममहं प्रणम्य पितरं गोविन्दरामात्मजं,
साहित्यालयरंगनाथतनयं श्रीकृष्णभट्टं गुरुम् ।
टीकां बालमुदे करोमि विशदां गंगालहर्याः परां,
तुष्यंति प्रतिभाजुषश्चपलतां वीक्ष्यार्भकस्य स्फुटाम् ॥२॥

Text same as at no 3415 in part II (B)

## 4993. गायत्रीवर्णमाहात्म्यस्तोत्रम्

OPENING

श्रीगणेशो जयति ॥

ॐ तकारस्य यो रूपं श्वेतं पीत च लोहितम् ।
चक्षुःश्रोत्रकृतं पापं ॐकारो दहते क्षणात् ॥१॥

तकारं पद्मरूपं च ब्रह्मविष्णुशिवार्चितम् ।
ब्रह्महत्यादिकं पाप तकारो दहते क्षणात् ।।२।।
त्सकार श्वेतरूपं च केशवेन सदार्चितम् ।
गोहत्यादिकृत पापं त्सकारो दहते क्षणात् ।।३।।

CLOSING

दकारं सिन्दूरवर्णं शेषेणैव सदार्चितम् ।
उत्कृष्टं च कृतं पापं दकारो दहते क्षणात् ।।२३।।
यकार श्वेतवर्णं च वायुना च प्रपूजितम् ।
ब्रह्मस्वहरण पापं यकारो दहते क्षणात् ।।२४।।
तकार नीलवर्णं च ईश्वरेण सदार्चितम् ।
शिवस्वहरणं पापं व्यंजनं दहते क्षणात् ।।२५।।

COLOPHON

इति गायत्रीवर्णनामुच्छ्यवर्णन संपूर्णं समाप्तम् ।
भग्नपृष्ठकटिग्रीवो बद्धमुष्टिरधोमुखम् ।
कष्टेन लिखितं शास्त्र यत्नेन परिपालयेत् ।।

## 5033. चामुण्डामन्त्रकवचम्

OPENING

श्रीगणेशाय नमः । अथ चामुण्डामंत्रकवचस्तोत्रं लिख्यते ।
ॐ अस्य श्रीचामुण्डास्तोत्रमंत्रस्य श्रीदधिची ऋषिः, जगती छदः, चामुण्डा देवता, ऐं बीज, ह्रीं शक्तिः, क्लीं कीलकं, मम अमुककामनासिद्धयर्थे जपे पाठे विनियोगः । अथ अगन्यासः—

CLOSING

इत्येव मंत्रबीजं स्तवनविधिमते पातकव्याधिनाशं
प्रत्यक्षं शान्तिरूपं ग्रहबलमथन मर्द्दनं शाकिनीनाम् ।
इत्येवं वेगवन्तं सकलभयहरं सिद्धिद शक्तिरूपं
मंत्राणामष्टशत पठति च पुरुषः प्राप्नुयाति ह्यभीष्टम् ।।

COLOPHON

इति श्रीपृथ्विधराचार्यविरचितं चामुण्डास्तोत्रकवच सम्पूर्णम् ।।

## 5091. दिव्यक्रीडाबहुमानस्तोत्रं सटीकम्

OPENING

ॐ अहो कोऽपि जयत्येष स्वादुपूजामहोत्सवः ।
यतोऽमृतरसास्वादमश्रूण्यपि ददात्यलम् ।।१।।

एवं इत्यनुभवसाक्षिकः स्वादुरानन्दमयः, कोपीति स सावेशात्मा पूजामहोत्सवो जयति, यतः पूजामहोत्सवादऽस्र(श्रू)णि बाष्पा अपि अमृतास्वादमल ददति आनंद-प्रभवस्वाच्चमत्कारमेव प्रस्तौति ।।१।।

CLOSING

जयत्येष भवद्भक्तिभाजां पूजाविधिः परः ।
यस्तृणैः क्रियमाणोऽपि रत्नैरेवोपकल्पते ।।४।।

अपि भिन्नक्रम[म]तेन तृणैरपि क्रियमाणो यो रत्नैरेवोपकल्पते पूर्णविश्रांतिप्रदो

भवति स भवद्भक्तिभाजां त्वत्समावेशशालिनां परः पूर्णः पूजाविधिर्जयतीति शिवम् ।

COLOPHON इति श्रीमदुत्पलाचार्यकृतस्तोत्रावलौ दिव्यक्रीडाबहुमाननाम्नि समावेशे स्तोत्रे विवृतिः ॥१६॥

## 5104. देव्याः स्तवः

CLOSING ॐ ॥ श्रीगणेशाय नमः ॥ श्री अन्नपूर्णायै नमः ॥

चन्द्रार्द्धभालसुमुखेन्दुजये त्रिनेत्रे,
दिव्यास्त्रभूषणभराष्टभुजे च सम्यक् ।
मन्दारहारभवतारणकारणे वै,
तिष्यद्धनाथनमितं तव पादपद्मम् ॥१॥

श्रीखडमंडितकपोलकलाकलाप,
ताटकर्कातरविचन्द्रविकासकारि ।
रत्नैर्युता कलकलत्तव कर्णबाला-
ज्योतिःप्रकाशसकला दिवि तारकाभा ॥२॥

CLOSING आद्ये त्वदीयवरदानकृपा विरंचि-
स्रष्ट्रादिभूतभगवान् परिपालयन्ति । (?)
श्रीमत्कपर्द्दि तव देहदयान्नपूर्णे (?)
दाता त्वमेव धनधान्यसमृद्धिवृद्धयै ॥६॥

देव्याः स्तवं पठति यः प्रयतः प्रभाते,
सपत्सुख धन वयो लभते मनुष्यः ।
नैरोग्यभाग्यमुदयं च रिपुक्षय च,
गोविन्दविप्ररचितं शुभद सदैव ॥१०॥

इति श्रीरामात्मजगाविन्दकृत

COLOPHON देव्याः स्तव सम्पूर्णम् । सवत् १८०७ श्रावण कृष्णा ५ गुरौ लिखितमिदम् ।

## 5105. देहस्थदेवताचक्रस्तोत्रम्

ॐ नमश्चित्तार्थाय—

OPENING असुरसुरवृन्दवन्दितमभिमतवरवितरणे निरतम् ।
दर्शनशताग्रपूज्यं प्राणतनु गणपतिं वन्दे ॥१॥

वरवीरयोगिनीगणसिद्धावलिपूजिताङ्घ्रियुग्मम्,
अपहृतविनयजनार्ति वटुकमपाभिधं वन्दे ॥२॥

यो धीबलेन विश्वं भक्तानां शिवमयं भाति ।
तमहमवधानरूपं सद्गुरुममलं सदा वन्दे ॥३॥

CLOSING षड्दर्शनेषु पूज्यं षट्त्रिंशत्तत्त्वसंवलितम् ।
आत्माभिक्ष(ष)सतत क्षेत्रपति सिद्धिदं नौमि ॥१४॥

संस्फुरदनुभवसारं सर्वतः सततसन्निहितम्
नौमि सदाऽदित्यमित्थ निजदेहगदेवताचक्रम् ॥१५॥

COLOPHON इति देहस्थदेवताचक्रस्तोत्रं कृतमभिनवगुप्तपादानाम् ।

## 5156 पंचस्तव्यां चर्चास्तवः

OPENING ॐ श्रीगणेशाय नमः ॥

सौन्दर्यविभ्रमभुवो भुवनाधिपत्यसंपत्तिकल्पतरवः त्रिपुरे जयन्ति ।
एते कवित्वकुमुदप्रकरावबोधपूर्णेन्दवस्त्वयि जगज्जननि प्रणामः ॥१॥
देवि स्तुतिव्यतिकरे कृतबुद्धयस्ते, वाचस्पतिप्रभृतयोऽपि जडीभवन्ति ।
तस्मान्निसर्गजडिमाकृतमोहमत्र स्तोत्रं तव त्रिपुरतापनपत्नि कर्तुम् ॥२॥

CLOSING ब्रह्मेन्द्ररुद्रहरिचन्द्रसहस्ररश्मिस्कन्दद्विपाननहुताशनवन्दितायै ।
वागीश्वरि त्रिभुवनेश्वरि विश्वमातस्तर्हिः स्वकृत संस्ततुये नमस्ते (?) ॥२९॥

खड्गं पादुकमञ्जन च गुटिकां सारस्वतं संपदं
मृत्योर्वञ्चनमुग्रकालहरणं देहस्थितेः कारणम् ।
भ्रूभगाभ्रगतुंगवृक्षपतनं वश्य जगन्मोहितं,
चर्चाजाप्यमिदं करोतु सतत त्वत्पूजकस्येप्सितम् ॥३०॥

COLOPHON इति श्रीपचस्तव्यां चर्चास्तवो समाप्तः ॥

## 5169. पद्मावतीस्तोत्रं सविधिकम्

OPENING अस्य श्रीमंत्रराजस्य परमदेवता पद्मावती चरणाबुद्ध(जे)भ्यो नमः ॥ ॐ अस्य श्रीपद्मावतीमंत्रस्य सुरासुरविद्याधरनागेन्द्रमहाऋषयः, निचद्गायत्री छन्दः, श्रीपद्मावती देवता, कमलबीज, नागभव शक्तिः, प्रणवः कीलकं धर्मार्थकाममोक्षार्थे जपे विनियोगः श्री अंगुष्ठाभ्या नमः, ऐं तर्जनीभ्या नमः, ॐ मध्यमाभ्यां नमः श्रीपद्मावती देवता न मिकाभ्यां नमः सुरासुरविद्याधरनागेन्द्रमहाऋषयः कनिष्ठिकाभ्यां नमः, निचद्गायत्रीछन्दोऽस्त्राय फट्, श्री बीजं हृदयाय नमः, ऐं शक्तिः शिरसे स्वाहा, ॐ कीलकं शिखायै वषट्, श्रीपद्मावती देवता कवचाय हुं, ब्रह्माविष्णुसदाशिवऋषयो नेत्रत्रयाय वौषट्, निचद्गायत्री छदोऽस्त्राय फट् ॥
अथ ध्यानं—

पाशाऽङ्कुशधरा पाणौ वीणापुस्तकधारिणी ।
पद्ममध्ये वसेन्नित्यं दुग्धकुन्देदुनिर्मला ॥१॥

CLOSING यन्नामश्रवणाद् व्रजति नितरां हारं गता दुर्जनाः ।
भूतप्रेतपिशाचराक्षससुरा दुष्टा ग्रहा व्यन्तराः ॥२॥
डाकिन्योऽसुरदुष्टशाकिनिगणाः सिंहादयाश्चोरगाः
देवी वृश्चिककीटक(कृताः) दुर्भिक्षदावानलाः ॥३॥

दिव्यं स्तोत्रपवित्रपटुतरपठितं भक्तिपूर्वं त्रिसन्ध्यं,
लक्ष्मी सौभाग्यरूपं दलितकलमल मंगलं मंगलानाम् ।
पूज्य कल्याणमालां जनयति सतत पार्श्वनाथप्रसादा-
द्देवी पद्मावती नः प्रहसितवदना या स्तुता दानवेन्द्रैः ॥३॥
कलशः पठित भणितं गुणित जयविजयपरमं निबंधन,
परम सर्वाधिव्याधिहर त्रिजगति पद्मावतीस्तोत्रम् ॥३६॥

COLOPHON इति श्रीपृथ्वीभूषणसूरिविरचितं पद्मावतीस्तोत्रं संपूर्णम् । संवत् १८५५ वर्षे मिति द्वितीय श्रावण सुदि १३ उष्णवासरे लिखितं ऋः उदैचन्द भाईजी श्री पं० ऋणजीतजी वाचनार्थं ।

## 5173. पलनास्तोत्रम्

OPENING राग रामकली ॥ चर्चरि ता(ल)

प्रेंखयाग्र्ये कशायनम् ।
चिरविरहितापहरमतिरुचिरमीक्षण प्रकटय प्रेमायनम् ॥ ध्रुवपदं ॥
तनुतरद्विजपंक्तिसितललितानि हसितानि तव लीलागायकीनाम् ।
इयदवधिपरमेतदासया समभवज्जीवित तावकीनाम् ॥१॥

CLOSING वचनरचनोदारहाससुसहजस्मृतामृतचर्यैरार्तिभरमपनयम् ।
पालय सदाऽस्मानस्मदीयश्रीविट्ठलेश निजदासमुपनयनम् ॥

COLOPHON इति श्रीविट्ठलेश्वरविरचितं पलनासम्पूर्णं समाप्ता ।

## 5174. पश्चिमाधीशस्तुतिः

OPENING कल्याणकल्पद्रुमवारिवाह, सुरासुरेन्द्रप्रणतांघ्रिपद्म ।
भक्तप्रमोदार्णवपूर्णचन्द्र, विश्वेशरत्न जय पश्चिमेश ॥१॥

CLOSING अतिविचित्रचरित्र जगत्प्रभो !
श्रुति सि...... . जंयवल्लभः ।
रचयति क्रमपूजनतत्परः
पठति यो लभते सुमनप्रियम् ॥९॥

COLOPHON इति पश्चिमाधीशस्तवनं समाप्तम् ॥

## 5175. पादादिकेशांतस्तोत्रम्

OPENING श्रीहेरम्बगुरुभ्यां नमः ॥

कल्याणं वो विधत्तां कटकतटलसत्कल्पवाटीनिकुंज-
क्रीडासंसक्तविद्याधरनिकरवधूगीतरुद्रावदातः ।
तारैर्हेरम्बनादैस्तरलितनिनदत्तारकारातिकेकी,
शर्वो नित्यंत्यभिजनकपदं सर्वदा पर्वतेन्द्रः (?) ॥१॥

यस्य प्राहुः स्वरूपं सकलदिविषदां सारसर्वस्वयोग
यस्येषुः शार्ङ्गधन्वा समजनि जगतां रक्षको जागरूकः ।
मौर्वीदर्वीकरणादपि च परिवृढः पूस्त्रयी सा च लक्ष्य
सोऽव्यादव्याजमस्मानशुभभिदनिशं नाकिनां श्रीपिनाकः ॥२॥

CLOSING

देवेभ्यो दानवेभ्यः पितृमुनिपरिषत्सिद्धविद्याधरेभ्यः
साध्येभ्यश्चारणेभ्यो मनुजपशुपतज्जातिकीटादिकेभ्यः।
श्रीकैलासप्ररूढास्तृणविटपिमुखाश्चापि ये संति तेभ्यः
सर्वेभ्यो निर्विचार नतिमुपरचय सर्वपादाश्रयेभ्यः ॥४०॥

ध्यायेन्नित्य प्रभाते प्रतिदिवसमिदं स्तोत्ररत्न पठद्यः,
किं वा ब्रूमस्तदीयं सुचरितमथवा कीर्तयामः समासात् ।
सपज्जात समग्र सदसि बहुमति सर्वलोकप्रियत्वं,
सप्राप्यायुः शतांते पदमयति परब्रह्मणो मन्मथारेः ॥४१॥

COLOPHON

इति श्रीमच्छंकराचार्यविरचित श्रीमत्पादादिकेशांतं स्तोत्रं सम्पूर्णम् ।

## 5176. पाशानुद्भेदस्तोत्रं सटीकम्

OPENING (w.)

किञ्चिदेव न लोकानां भवदावरण प्रति ।
न किञ्चिदेव भक्तानां भवदाव-रण प्रति ॥१॥

OPENING (ct.)

चिन्मयत्वात् स्वरूपावरणावलोकानां ससारिणा न किंचिदेव, कात्वा अपितु सर्वमेव, भेदेन विश्वमेवार्पयतस्समस्तशक्तिचक्रव्यवहृतत्वात् भक्तानां न किञ्चिदेव नैव किंचिदित्यर्थः, शिवतत्वपर्यन्तस्याशेषस्य स्वागकल्पनया प्रमेयीकृतत्वात् ।

CLOSING (w.)

परमेश्वरता जयत्यपूर्वा, तव सर्वेश यदीशितव्यभूत्या ।
अपरापि तथैव ते ययेद, जगदाभाति यथा तथा न भाति ॥

CLOSING (ct.)

हे विश्वेश तवापूर्वा परमा प्रकृष्टा परमशिवरूपेश्वरता जयति । यद्यस्मादियमीशितव्येन भिन्नेन ईशनीयेन वस्तुना भूत्या स्वात्मस्वात्कृताशेष अपरापि परमशिवापेक्षया स्थूलापि सदा शिवेश्वर( ) तव सम्बन्धिनीश्वरता तथैवैतत्पूर्वा जयतीत्यर्थः, ययेदं जगद्ययेति नीलसखादिदेहाभिभेदेनाभाति तथा तेनैव प्रकारेण भासमानसत् अहंताप्रकाशमरसीभूतत्वात् यदसावात्मन्यसत्कल्पाः प्रकाशस्यैव················ प्रकाशाय वास्ति स्वात्मनः स्वपरात्मभिः इति स्थित्या न भवति स्वप्रकाश एव भगवान् सदाशिवादिरूपो भातीत्यर्थः, इति शिवम् ।

COLOPHON

इति श्रीमदुत्पलदेवाचार्यकृतस्तोत्रावलौ पाशानुद्भेदनामनि षोडशे स्तोत्रे विवृतिः ॥

## 5187. प्रत्यंगिरास्तोत्रम्

OPENING

श्रीमहागणाधिपतये नमः ॥

अथ प्रत्यंगिरास्तोत्रमंत्रस्य अगिरा ऋषिः, अनुष्टुप् छंदः, प्रत्यगिरा देवता,

स्तुतौ विनियोगः, ॐ क्रां नमः अंगुष्ठाभ्यां नमः, ॐ क्रीं नमः तर्जनीभ्यां नमः, ॐ क्रूं नमः मध्यमाभ्यां नमः, ॐ क्रैं नमः अनामिकाभ्यां नमः, ॐ क्रौं नमः कनिष्ठिकाभ्यां नमः, ॐ क्रः करतलकरपृष्ठाभ्यां नमः, एवं हृदयादि । ॐ क्रां नमः हृदयाय नमः, ॐ क्रीं नमः शिरसे स्वाहा, ॐ क्रूं नमः शिखायै वषट्, ॐ क्रैं नमः कवचाय हुँ, ॐ क्रौं नमः नेत्रत्रयाय वौषट्, ॐ क्रः नमः अस्त्राय फट् ।

अथ स्तोत्रध्यानम्—

कृष्णवर्णां बृहद्रूपां रक्तकुञ्चितमूर्द्धजां ।
शिरः कपालमालाञ्च विकेशी घूर्णितानताम् ॥१॥
रक्तनेत्रामतिक्रुद्धां लम्बजिह्वामधोमुखीं ।
दंष्ट्राकरालवदना नेत्रभ्रूकुटिलेक्षणाम् ॥२॥

CLOSING

जिताऽपराजिता देवी जयन्ती भद्रकालिका ।
सिद्धलक्ष्मीर्महालक्ष्मीः कालरात्रि नमोस्तु ते ॥११॥

चतुर्थी(थः) पुष्पांजलिः ॥

कालि करालविक्रांते कालिके पापहारिणि ।
विकरालमुखे देवि ज्वालामुखि नमोस्तु ते ॥१२॥

पचमी(मः) पुष्पाजलिः ॥

COLOPHON

एवं पञ्चपुष्पांजलीन् प्रत्यंगिरायै निवेदयेत् । ॐ शांतिः शांतिः शान्तिः । स स स्वयं प्रत्यंगिरा भवति । द्विवेदो उद्धवसूनोरनतदेवस्येदम् ॥

## 5236 भगवद्भक्तिस्तोत्रम्

OPENING

ॐ नमो नेत्रनाथाय ॥

ॐ प्रत्यक्षवस्तुविषयाय जगद्धिताय, विश्वस्थितिप्रलयसम्भवकारणाय ।
सर्वात्मने विजितकोपमनोभवाय, तुभ्यं नमस्त्रिभुवनप्रभवे शिवाय ॥१॥

CLOSING

कृत्वा मया तव नुतिं जगदेकबन्धो, भक्त्या स्वबुद्धिसदृशीमवधूतनाम्ना ।
पुण्यं यदल्पमपि किंचिदुपार्जितमत्र, लोकस्य ते न भगवस्त्वयि भक्तिरस्तु ॥६५॥

CLOSING

इति श्रीम(द)वधूतसिद्धविरचितं भगवद्भक्तिस्तोत्रं समाप्तम् ॥

## 5265· मङ्गल-मञ्जरी

OPENING

श्रीगणेशाय नमः ॥

सुरनदी गिरिजा गणनायको, हरिहरौ ससुतौ शुभदायकौ ।
रतिपतिः सरतिः सुरनायकः, प्रतिदिनं शुभदा वरकन्ययोः ॥१॥
जनकजा कमला कमलापतिः, रघुपतिर्भरतो भरताग्रजः ।
दशरथः ससुतः सकलत्रकः, प्रतिदिनं शुभदा वरकन्ययोः ॥२॥

CLOSING

रामाधारेण मंत्रेण कृता मंगल-मंजरी।
लोकानां मंगलाधात्री शुभदा वरकन्ययोः ॥ इति अभिषेकः।

## 5270. महावाणीपञ्चरत्नस्तोत्रम्

OPENING

श्रीगणेशाय नमः ॥

स्वस्ति श्री अथ पदविलासनिकुंजरहस्यश्रीमहादिव्यमहाराजेश्वरप्रवरपरमहंस-वंसा(शा)चार्यश्रीमद्धरिव्यासदेवजूकृतमहावाणीपचरत्न लिख्यते। तत्र प्रथम श्री अष्ट-काल सेवासुख लिख्यते। श्लोक। श्री आचार्य-सखीनाम रत्नावलीस्तवं। श्रीराधाकृष्ण-सखीभ्यो नमः॥

नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे।
राधाधरसुधासिंधौ नमो नित्यविहारिणे ॥१॥
राधां कृष्णस्वरूपां वै कृष्णं राधास्वरूपिणम्।
कलात्मानं निकुंजस्थं गुरुरूपं सदा भजे ॥२॥

CLOSING

समस्तनानाविधदेवतागणैः-विरंचिगंगाधरशारदादिभिः।
मूर्द्धाभिवद्यारुणपादपद्मां श्री श्रीहिता सततमानतोऽस्मि ॥३५॥
विलोहितप्रांतविशाललोचना, मुखप्रभापूर्णनिशाकरोपमाम्।
सच्चामरालकृतहस्तपंकजां, श्री रंगदेवी मनसा स्मरामि ताम् ॥३६॥
॥ इति ॥

## 5279. मुकुन्दमालावैजयन्ती-स्तोत्रम्

OPENING

श्रीमते रामानुजाय नमः ॥

घुष्यते यत्र नगरे रंगयात्रा दिने दिने।
तमहं शिरसा वन्दे राजानं कुलशेखरम् ॥१॥
श्री वल्लभेति वरदेति दयापरेति,
भक्तप्रियेति भवलुंठनकोविदेति।
नाथेति नागशयनेति जगन्निवासे-
त्यालापनं प्रतिपदं कुरु मे मुकुन्द ॥२॥
जयति जयति देवो देवकीनंदनोऽयं,
जयति जयति कृष्णो वृष्णिवंश-प्रदीपः।
जयति जयति मेघश्यामलः कोमलांगो,
जयति जयति पृथ्वीभारनाशो मुकुन्दः ॥३॥

CLOSING

गोविंदनामामृतपूरितास्यं
गोविन्दसंकीर्त्तनजातहर्षम्।

गोविन्दपादापितचित्तवृत्ति
गोविन्द ! सम्पादय मे शरीरम् ॥५३॥

अन्ते सहायमपि वाञ्छसि चेत् प्रयाणे
त पुण्डरीकनयन भज साधुचेता ।
यः प्रत्यपद्यत पुरा शरणागतानां,
दौत्यं दयाद्रहृदयो भुवि पाण्डवानाम् ॥५४॥

COLOPHON

इति श्रीकुलशेखरविरचित मुकुंदमालावैजयन्तीस्तोत्रं सम्पूर्णम् । लिखितं राममिश्र रामानुजदासपठनार्थम् रामानुजदासस्य । मिति भादवा बदि ७ शनिवार सं० १८८६ ।

## 5283. यतिराजभटीयपंचकस्तुतिः सटीका

OPENING

श्रीमते रामानुजाय नमः ॥

भ्रव्याद्वो यमदृष्टपूर्वकष्टापेक्षाक्षणाकपित-
स्वेदार्द्रीकृतकुकुमारुणकुचामुद्वीक्ष्य संरम्भतः ।
मत्वा च्वाक्षविदारितां प्रणयिनी मंत्रेण तूर्णेन यो
विद्याधारिदृश प्रियासु हसितः प्राज्ञोऽपि सत्यव्रतः ॥१॥

प्रणम्य श्रीहयग्रीवचरणांभोरुहद्वयम् ।
ब्रह्मलक्षणवाक्यार्थः संग्रहेण प्रकाश्यते ॥२॥

परीक्ष्य लोकान् कर्मचिताञ्ब्राह्मणो निर्वेदमायात् तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयत इति,

CLOSING

इत्येतत्पद्यत्रितयपदार्थगुणवर्णनैः
श्रीरमारमणाज्ञानिरामानुजमुदास्पदम् ।
व्याख्यान श्रीगुरोः सूक्ति सुधाश्रवणतोऽजनिः ।
श्रीमुरलीधरसज्ञस्य सतामेवं मुदेऽस्तु च ।

COLOPHON

इति श्रीमद् रामानुजाचार्यचरणाबुजदासस्य( )शालिशातदांतविवेकिवरशिरोमणि-श्रीमुरलीधराचार्यपुत्र-तच्चरणानुरागिउपेन्द्र - रामानुजदासेन वंशीधरेण विरचिता यतिराजभटीपचकस्तुतिपद्यत्रयस्य च व्याख्या पूर्णा ।

Post-colophonic

काषायशोभिकमनीयमुखाब्जहासं
दण्डत्रयोज्ज्वलकर विमलोपवतीतम् ।
उद्यद्दिनेशनिभमुल्लसदूर्ध्वपुण्ड्रं
रूप तवास्तु यतिराज ! दृशोर्ममाग्रे ॥
चंद्राग्निवसुचद्रमिते वत्सरे या बोधनी (?)
श्रीमद्भरतदासस्य प्रेरणयालिख त्वमुं ॥

संवत् १८३१ शाके १६९६ प्रवर्त्तमाने मासोत्तममासे पौष मासे शुभे शुक्लपक्षे

तिथौ दशम्यां बुधवासरे लिषतं जोसी रघुनाथ महात्मा सवाई जयपुरमध्ये । महाराज श्री सवाई पृथ्वीसिंहजी राज्ये । स्वामीजी श्री द्वारिकादासजी तत् शिष्य भरथदास लिखायत पठनार्थं मोहनदासजी ।। शुभम् ।।

## 5286. रघुवीरस्तुतिः

OPENING श्रीरामाय नमः ।।

हा हा भूमारहारार्थस्वीकृतांशावतारण ।
हा हा रघुकुलोत्तस देहि मे निजदर्शनम् ।।१।।

हा हा दाशरथे देव सौमित्रिभरताग्रज ।
हा हा दर्शितकौमार देहि० ।।२।।

CLOSING इति रघुनाथचरणसरसीरुहयुगले श्रीनाथेन मया कृतया ।
कृतिकुसुमांजलिसमर्पा स मयि निषीदतु सह रमया ।।६।।

COLOPHON इति श्रीशाचार्यवर्यवल्लभपादपद्मोपजीविना कृतं श्रीरघुवीरस्तुतिस्त्रिभंगीजयदो- ।। श्रीः ।।ठ।।छ।

स्वकृतमुरुगभीरग्रंथभावार्थसार्थप्रकटीकरणमुच्चैर्नोचितं धीमदुच्चैः ।
इति निजकृप यास्तत्वभार्गकवालः पुनरपि निजपुत्रे वल्लभः प्रादुरासीत् ।।१।।

## 5298. रामचन्द्रस्तोत्रम्

OPENING श्री गणेशाय नमः ।। श्री सरस्वत्यै नमः ।। श्रीनिशाकरगुरुचरणकमलाभ्यां नमः ।।

सलक्ष्मणं सशत्रुघ्नं भरताग्रजमीश्वरं,
कौसल्यानन्दनं वन्दे रामं दशरथात्मजम् ।।१।।

सर्वज्ञ परमात्मान विश्वेश पुरुषोत्तमम् ।
रामं वन्दे प्रभु शान्तं सत्याकारं सनातनम् ।।२।।

CLOSING नत्वा सदाशिवं ध्यात्वा गोविन्दाशं निशाकरम् ।
निर्मित छविनाथेन रामस्तोत्रं सुखप्रदम् ।।५०।।

शुभं सर्वप्रदं दिव्यं रामस्तोत्रम(न)न्तकं
गोविन्दाशात्मजेनेदं छविनाथेन निर्मितम् ।।५१।।

श्रोष्यन्ति ये पठिष्यन्ति रामस्तोत्रं नरोत्तमाः ।
ते भुक्त्वा दुर्लभान् भोगान् यास्यंति परम पदम् ।।५२।।

COLOPHON इति श्रीमंदावर्ग्यकगोविन्दाशात्मजकविछविनाथविरचितं रामचन्द्रस्तोत्रं सम्पूर्णं शोभतै । शुभं भवतु ।

सं० १८३१ उत्तरायणे वसंतऋतौ वैशाखे मासि कृष्णपक्षे दशम्यां बुधवासरे लिखितमिदं पुस्तकं कवि छविनाथेन । श्री दशरथात्मजाय नमः ।

श्रीकौशल्यानंदनाय नमः । श्री भरताग्रजाय नमः । श्री सीतापतये नमः । श्रीरामचन्द्राय नमः । सत्यं ज्ञानमनन्त ब्रह्म । ॐ अक्षरं परमं ब्रह्म । ॐ सच्चिदानन्दं ब्रह्म ।

## 5300. राममहिम्नः स्तोत्रम्

OPENING

श्री रामचन्द्राय नमः ॥

महामोहावर्ते पतितमिह मातेश शरणम्,
शरण्यस्त्वत्तोऽन्यः प्रभवति न कोऽप्यत्र जगति ।
अतस्त्वत्पादांभोरुहयुगलमाश्रित्य नितरा-
मितीह संसाराद्वृजिननिचयादुद्धर विभो ॥१॥

CLOSING

मोहश्चेद् ध्यानयोगे मम भवतु पुनर्मत्सरो मत्सरी वै ।
त्वत्तोऽन्यद्राम ! सौख्यस्थलमिह नितरां नैव पश्यामि भूमौ ॥४६॥

इति श्रीमच्चतुर्भुजाचार्यचरणसरोजनिवसनमनश्चचरीकास्वादितचिन्मकरंद-श्रीमद्द्विजरामाचार्यविरचितं श्रीराममहिम्नः स्तोत्र सम्पूर्णम् ।

## 5309. रासदण्डकस्तुतिः

OPENING

श्र गिरिधारिणे नमः ।

कृततिमिरनिरासस्फीतशीतांशुभास-
प्रणयकुमुदवासव्याप्तवाताविभासः ।
स्फुरदधरविपास (—) दृग्भ्रू विलासः
व्रजयुवतिसमासः पातु शौरेः स रासः ॥१॥

निखिलनिजजनानंदनन्दारविन्दाननेन्दिरानन्दमन्दारकुन्दादिवृन्दोपरिस्पन्दमानाति-मन्दानिलव्याप्तवृन्दावनोपान्तसप्तस्वरोदात्तवेणुस्वनप्राप्तमोहातुरानाप्तगेहानभिज्ञा ।

(अ) देहादिसत्यक्तदोहादिकेहाभितूहानभिज्ञ प्रियेहापरावर्तमानाभिरत्युच्छलत् प्रेम-विच्छिन्नसच्छासनस्त्रसदसावतमवलक्वारुचेलाञ्चलासचितायोगिनीभिः श्लथस्निग्ध-धम्मिल्लनद्धप्रसूनानुद्धालिनीभिः श्रमस्विन्नगण्डस्थलाञ्जोलताटंकिनीभिः क्वणद्भूषणा-श्राविततमा(ला)भिः समुत्तुङ्गवक्षोजहस्तस्रस्तहाराभिभूताद्भुतसोमतिनीभिर्दृगगी-कृताननाभगतद्योतमानानां ॥१॥

CLOSING

युवतिकरतलाब्जरासोद्भवप्रेमबद्धप्रियाकठनद्धस्वपाणिप्रबुद्धस्मरक्षोभिचित्तानुबद्ध-क्रीडया संचलत्पादपद्मावनिन्यासविभासमानावलन् मध्यसिंजित्कलापावलालापजाति-प्रभेदातिसमोहितस्वान्तकांतादृगन्ताचितोपांतराधानितांतप्रियश्रालगोपीकृतैकांतसंगोपरि-बलान्तवारिमुक्तघटासारिविद्युच्छटाहारियोषिद् घटासारनृत्यत्र्टाकारचञ्चत्पटाधार-नासालसद्भूषणासादितस्नेहहासाधिके भ्रूविलासाननक्ष्वेलिका सादराभीरिकाभीरवा-कारिताभीरसाभीष्मुकाभी रमाराजिताभी रताभीरुचिक्रीडिताभीरवीरांबुभिः पाहिनस्त्वं व्रजाधीश ॥४॥

COLOPHON: इति श्रीमद्देवकीनंदनविरचितो दण्डकः समाप्तः ।

## 5326. वाक्पुष्पोपहारः

श्रीगुरुपादुकायै नमः ।।

OPENING

जननि स्वांतगतयो भुजंगा इव वक्रगाः ।
म्रतो भुजंगगतिमद् वृत्तैः स्तोष्ये यथामति ।।१।।

यदा रागदोषा भवेयुर्न चित्ते,
भजेयुश्च मैत्र्यादियोगा गुणास्तत् ।
हृदाकाशमध्ये चिदात्मानमीशं,
भजे ध्यानयोगैर्भव ब्रह्मरूपः ।।२।।

न माता न तातो न पत्नी न पुत्री,
न बंधुर्न मित्रं न दासो न दासी ।
य एते भवेयुर्देहसंबंधयोगा-
ज्जीवार्थिनस्त्वं परब्रह्मरूपः ।।३।।

CLOSING

सृष्टिस्थित्यतकारि त्रिदशवरनुते भक्तदुःखौघहृत्रि
श्रुत्या स्मृत्याभिगीतप्रणतसुखकरि ब्रह्मणोर्द्धांगभागे।
विष्णोः सोदर्य्यवर्ये त्रिभुवनजननि श्रीराजराजेश्वरि त्वां
प्राप्तोऽहं त्वत्पदाब्जे शरणमिति यथा रोचते तत्कुरुष्व ।।१६।।

। ।स्रग्धरायामेव ।।

सख्यां सर्वेषु पद्येष्वहमथ कथये बोधशः संख्यया स्या-
दन्यत्पद्याक्षराणा परिगणतमथो वच्मि नाना न रोगाः ।
श्रीमन्मातुर्मुखाब्जे प्रतिदशनमघामक्षराणां सहस्रं
न न्यून नातिरिक्तं यदि मम भवता देहि सिद्धि प्रतूर्णम् ।।१७।।

COLOPHON

इति श्रीमत् सत्यानदपूज्यपादशिष्यश्रीविमर्शानंदनाथविरचितो वाक्पुष्पोपहारः सपूर्णं समाप्तिमगात् ।

स० १८०६ ।

## 5330. विज्ञप्तिस्तोत्रम्

OPENING

श्रीमते रामानुजाय नमः ।।

यः सर्वज्ञः सर्वसाक्षित्यमवादीदिति श्रुतिः ।
प्रपन्नस्य मेऽद्यापि कथं दुःख न वेद तत् ।।१।।

CLOSING

करोतु कमलाकान्तः कामिनां करुणाकरः ।
यत्कृत विकृतं नैव कदाचिदपि कस्यचित् ।।७।।

सोऽस्मानवतु सर्वत्र ददात्वभिमतं सदा ।
यः प्रार्थितो भक्तजनैः पपौ वह्नि दधौ गिरिं ।।८।।

COLOPHON

इति श्रीविट्ठलेश्वरविरचित विज्ञप्तिः संपूर्णम् ।।

## 5349. वियोगसारस्तोत्रम्

OPENING

श्री गणेशाय नमः ॥

अधमो देहभावस्तु जीवभावस्तु मध्यमः ।
उत्तमः साक्षिभावस्तु सोऽहं-भावो महात्मनः ॥१॥
अधमश्च कुलाचारः शौचाचारस्तु मध्यमः ।
उत्तमो नियमाचारः स्वेच्छाचारो महात्मनः ॥२॥

CLOSING

उत्तमो लयलीनश्च ध्यानलीनश्च मध्यमः ।
अधमो जपहोमश्च पूजाचारस्त्वधमाधमः ॥६॥
जपकोटिसम स्तोत्रं स्तोत्र कोटिजपो समः ।
जपकोटिसमो ध्यानं ध्यानकोटिसमो सय (शमः) ॥१०॥

COLOPHON

इति श्रीमच्छंकराचार्यविरचित योगसारस्तोत्रं सपूर्णम् । सवत् १६२७ रा आसोज मासे शुक्ल पक्ष ७ तिथौ शनिवासरे । पाली मध्ये लिप्यकृत । पुष्करणा कला: शिवदान: ॥ पठनार्थम् । आ० ललु भाइ री छे ।।श्रीरस्तु।।

## 5359. विष्णुचन्द्र... श्लोका:

OPENING

।। आशीर्वादिकाव्यं ।।

कमलभूतनया मुखपङ्कजे, वसतु ते कमला करपल्लवे ।
वपुषि ते रमतां कमलाङ्गजः, प्रतिदिन हृदये कमलापतिः ॥१॥

स्वस्त्यस्तु ते कुशलमस्तु चिराय स्वस्ति,
गोहस्तिवाजिधनधान्यसमृद्धिरस्तु ।
ऐश्वर्यमस्तु विजयोऽस्तु रिपुक्षयोऽस्तु,
कल्याणमस्तु भवता हरिभक्तिरस्तु ॥२॥

## 5360. विष्णुचित्तमुनिसुप्रभातस्तोत्रम्

श्रीमते रामानुजाय नमः ॥

OPENING

श्रीशादिसर्वगुरुपादपयोरुहेषु, नित्यानवद्यनिजभक्तिविहारयुक्तः ।
श्रीविष्णुचित्तगगनाचलयोगिराज-हंसः सदा रमतु मामक-मानसाब्जे ॥१॥
श्रीमच्छठारिमुनिदिव्यकटाक्षलब्धज्ञानाब्धिसद्गुणगणामृतवारिराशेः ।
उत्तिष्ठ सर्वजनवदितपादपद्म श्रीविष्णुचित्तमुनिराट् तव सुप्रभातम् ॥२॥

CLOSING

कारुण्यपूर्णकमनीयसरोजपत्रदृग्भ्यां कटाक्षितुमनाथमकिञ्चनं माम् ।
उत्तिष्ठ दासजनरक्षणबद्धदीक्ष, श्रीविष्णुचित्तमुनिराट् तव सुप्रभातम् ॥१५॥

स्वामिन्महीपकुलमौलिकिरीटरत्न-नीराजितांघ्रिसरसीरुहदेशिकेन्द्र ।
त्वत्किंकरस्त्वरसिके मयि दासदासे, श्रीविष्णुचित्तमुनिनाथ दयां कुरुष्व ॥१६॥

इति श्रीविष्णुचित्त······स्वामिनः सुप्रभात समाप्तम् ॥

## 5363. वेङ्कटेशस्तोत्रम्

OPENING

श्रीमते रामानुजाय नमः ॥

श्रीमत्कृपागुणनिधे कृतसर्वलोक, सवज्ञ शक्त नतवत्सकलसर्वशेषिन् ।
स्वामिन् सुशीलसुलभाश्रितपारिजात-श्रीवेंकटेशचरणौ शरणं प्रपद्ये ॥१॥

आर्यैः पुरार्पितसुजातसुगंधपुष्प-सौरभ्यसौरभकरौ समरन्निवेशौ ।
सौम्यौ ददातु भवनेऽपि नवानुभाव्यौ, श्रीवेंकटेश चरणौ०..........॥२॥

CLOSING

सत्त्वोत्तरैः सततसेव्यपदांम्बुजेन,
संसारतारकदयार्द्रदृगंचलेन ।
सौम्योपयतृमुनिना मम दर्शितौ ते,
श्री०........................॥१४॥

श्रीश श्रिया घटक त्वयादुपाय भावे, (?)
प्राप्ये त्वयि स्वयमुपेयतया स्फुरंत्या ।
नित्याश्रिताय निरवद्यगुणाय तुल्य,
मा किंकर वृषगिरीश न जातु मह्यम् ।।१५॥

इति श्रीवेंकटेशप्रशस्ति. सपूर्णम् ॥

## 5364. वेङ्कटेशस्तोत्रम्

OPENING

वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किंचन ।
वेङ्कटेशसमो देवो न भूतो न भविष्यति ॥१॥

मायावी परमानन्दस्त्यक्त्वा वैकुण्ठमुत्तमम् ।
स्वामी पुष्करिणीतीरे रमया सह मोदते ।।२॥

CLOSING

अहं दूरतस्त्वत्पदाम्भोजयुग्म-
प्रणामेच्छयाऽऽगत्य सेवां करोमि ।
सकृत्सेवया नित्यसेवाफलत्वं,
प्रयच्छ प्रयच्छ प्रभो वेंङ्कटेश ॥१३॥

अज्ञानिना मया दोषान् अशेषान्विहितान् हरे ।
क्षमस्व त्वं क्षमस्व त्वं शेषशैलशिखामणे ॥१४॥

COLOPHON

इति श्रीवेंकटेशस्तोत्रम् ॥ श्रीमते रामानुजाय नमः ॥

## 5412· शिवस्तुतिः

OPENING

श्रीगणेशाय नमः ।।

विततविविधसम्प्रदायशाखाव्यतिकरवेष्टितमूर्तये नमोऽस्तु ।
बहुतरजगदड्डवाजपूरप्रसवफलग्राहिपादपाय तुभ्यम् ।।१।।

CLOSING

न दहति सगरोच्चय न पादात्प्रभवति नाप्यलिकाद्वदेति चक्षुः ।
न च किमपि शृणोति नेत्रवर्गो मम कथमस्तु तवस्तवेऽधिकारः ।।१०५।।

**COLOPHON**

इति श्रीमहामहोपाध्यायमैथिलश्रीगोकुलनाथशर्मविरचिता शिवस्तुतिः समाप्ता ।। श्री ईश्वरो जयति ।

## 5422· सङ्कटहारिणीभवानीस्तोत्रम्

श्री गणेशाय नमः ।।

OPENIN

नमो काशिनिवासनी गगतीर, मदार्चितं चन्दन रक्तपुष्पं ।
सदा वंदित पूजितं सर्वदेवं, नमो सकटाहरनि भवानि ।।१।।

नमो मोहिनी मोहित भूतसंन्या, सदा चद्रवदनी हसं विकरालं ।
सदा मृगनयनी गुन रूप दृष्टि विसालं, नमो संकटा कष्टहरनी भवानी ।।२।।

CLOSING

इदं पचरत्नं पठेत्प्रातकाले, हरे पाप तनके बढ़े धर्मज्ञानम् ।।
सदा दुःख में कष्ट में रक्षपालं, नमो संकटा कष्टहरनी भवानी ।।६।।

तु ही योगिनी गोगनी योगपार, तु ही कामनी मोहित कामराज ।
तु ही विश्वमाता करे खप्र धारे, नमो सकटा कष्टहरनी भवानी ।।७।।

COLOPHON

इति सकटाहरनीभवानीस्तोत्र सपूर्णम् । शुभ भवतु ।

## 5439· सरस्वतीस्तोत्रम्

श्रीगुरुभ्यो नमः ।

धिषणाधीर्मतिर्मेधा वाग् वाणी च सरस्वती ।
गीर्वाणी भारती भाषा ब्रह्माणी परमेश्वरी ।।१।।

त्रिकाले वसुभिर्भूत्वा षड्भिर्मानैर्निरतर ।
पृथिव्यां तस्य सख्यानि अनंतकवयोर्जराः ।।११।।

## 5458· सर्वोत्तमस्तोत्रम्

OPENING

प्राकृतधर्मानामाश्रयमप्राकृतनिखिलधर्मरूपमतिः ।
निगमप्रतिपाद्य यत्तच्छुद्धं साकृति स्तौमि ।।१।।

कलिकालतमच्छन्नदृष्टित्वाद्विदु(प)श्चामपि ।
सप्रत्यविषयस्तस्य माहात्म्यं समभूद् भुवि ।।२।।

ययया निजमाहात्म्यं करिष्यन् प्रकटं हरिः।
वाण्या यदा तदा स्वास्यं प्रादुर्भूतं चकार हि ॥३॥

CLOSING

श्रद्धाविशुद्धबुद्धियं: पठत्यनुदिन जनः।
सततैकमनाः सिद्धिमुक्तां प्राप्नोत्यसंशयम् ॥
तदप्राप्तौ वृथा मोक्षस्तत्प्राप्तौ तद्गतार्थता।
अतः सर्वोत्तमस्तोत्रं जाप्यं कृष्णरसार्थिभिः ॥

COLOPHON

इति श्रीमदग्निकुमारप्रोक्तं सर्वोत्तमस्तोत्रं समाप्तम् ॥

## 5467. साम्बस्तोत्रं पर्यायटीकोपेतम्

OPENING

ॐ नमः श्री सूर्याय ॥

यन्मंडलं व्याधिविनाशहेतुर्यदृग्यजुःसामसुसंप्रगीतम्।
आतप्यते येन च भूर्भुवःस्वः पुनातु मां तत्सवितुर्वरेण्यम् ॥१॥

एवं विधा अस्मद्वर्णिता आकर्णिता सती वो युष्माकं भक्तिभाजां दुरितं हरतु शुभसमृद्धि च दिशतु। ददातु क इव मातृवत् ॥६॥

CLOSING

आचार्यचर्चपुत्रेण निजस्मृतिज्ञतेज्ञता।
पंडितेनालिगेनैषा टीका साबस्तुतेः सुखा ॥११॥

COLOPHON

इति सांबस्तोत्रस्य पर्यायरूपा टीका सम्पूर्णा ॥छ॥
तु लिषित जानीनारायण श्रीत्रिविक्रमाश्रमेण लिषापितम् ॥छ॥ शुभं भवतु,

## 5473. सुधानन्दलहरी

श्रीगणेशाय नमः ॥

शिव पूर्ण तेषामयनमयसे यन्नयनयो-
स्तवावर्ते पातोऽप्यह ह भवगर्तोद्धृतिकृती।
सदभः पानेन प्रविशति यदभोऽपि सुगतिं,
भवन्नामादत्तं सकृदपि च दत्तोऽखिलसुखम् ॥१॥

CLOSING

विवर्ते वेदानां सुमधुरसुधाराधिततरै-
र्भवोदग्रक्षोणीरुहदलनवैज्ञानिकततैः।
शिवप्राणा गंगे नु कमलमतिवेल शिवमयै-
र्जलौघैर्लोकोऽयं कलय सकलं मंगलमयम् ॥५२॥

इमां सान्द्रानन्दां सुरधुनिसुधानन्दलहरी,
भवद्भक्तः प्रातः प्रयतयतचेताः पठति यः।
श्रियं तस्मै दिश्याः सततममितां वीतविरतिं,
परं मृत्योः पत्युः पदमपि भवत्या भगवति ॥

COLOPHON

इति कोविदचक्रचूडामणिना श्रीयुवराजेन विरचितं सुधानंदलहरीनामधेयं स्तोत्ररत्नं संपूर्णम् ।

Post-colophonic

श्री भागीरथी सुप्रसन्ना भवतु ।

शास्त्रेषु ज्ञानं तथा शस्त्रसमापि बुद्धिः,
काव्येषु नव्यनलिनाधिकसौकुमारी ।
यस्याऽस्य नाम रसलास्यरसा च वाणी,
हर्षं न कस्य कुरुते युवराज एषः ।।
व्याकृत्यादिसमस्तशास्त्रसमुदायाभोधिकुंभासुतः,
काव्यालङ्कृतिनाटकोढसुकृतो काव्यस्य सत्य समः ।
पुण्यः पंडितराजराजि-गजता कुम्भाद्रिसंभेदने
दभोलिर्युवराजकोविदमणिर्वर्वर्ति सर्वोपरि ।।
अपि पुरुकृतरीढ पडितंमन्यमूढै-
र्मम तु सुकृतिरत्न हृत गृह्णन्ति संतः ।
अवगणितमवद्यैर्दर्दुरैरप्ययाप्याः
किमनणकमृणाल राजहंसास्त्यजंति ।।
श्रीभवानीचरण शरणं मम सतत ।। श्री राम

## 5489. सौन्दर्यलहरी-स्तोत्रं तरीटीकोपेतम्

OPENING (Ct.)

श्रीगणेशाय नमः ।। श्री ऐं नमः ।।

गाय गाय मधुरमुरलिनादमुन्मादमूर्तिः,
पाय दाय व्रजमृगदृशामानन मदमदम् ।
दाय दाय त्रिदशतरुणीलोचनेभ्यः प्रमोदं,
धायं धायं स्रजमभिनवा पातु खेलन्मुकुंदः ।।१।।
कांचिद्दामदधानमुन्नतकुच मध्ये कृशं भ्रूयुग-
भ्राजिष्णुस्मितशोभिसुन्दरमुखं कुन्दाभदतावली ।
सत्पाशाङ्कुशचापबाणविलसत् पाणिस्फुरन्नासिक,
कारुण्याद्रंदृगस्तु तत्पुररिपोरत.पुर मत्पुरः ।।२।।
सौंदर्यलहरीटीका शाक्तभागवतप्रिया ।
विश्वंभरेण क्रियते व्याख्या कौशलशालिना ।।३।।
केषांचित् प्रचुरप्रेमधारा नारायणे प्रभौ ।
अन्ये भवान्यामन्येषां महती समता मता ।।४।।

अथ शिष्टाचारपरिप्राप्तं प्रारीप्सितविघ्नविघातप्रयोजनकं शिवशक्तिस्मरणरूपं मंगलं कृत्वा शिष्यान् शिक्षयितुमादौ निबध्नन् शिवं हित्वा किमिति शक्तिः स्तूयते इत्याशंकां च परिहरन् विनयातिशयार्थं ब्रह्मादिभिराराध्याया भगवत्याः स्तुतीकरणे स्वस्यासंभावनां प्रकाशयति । इत्यादि

CLOSING (w.)

प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः,
सुधासूतेश्चंद्रोपलजललवैरर्घघटना ।
स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं,
त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥१०२॥

CLOSING (ct.)

यथा प्रदीपस्य ज्वालाभिः कान्तीभिः रात्रौ सूर्येण विनिहिताभिर्दिवसकरस्य सूर्यस्य नीराजन निर्मंछनं, यथा सुधायाः अमृतस्य सूतिरुत्पत्तिर्यस्मात्तस्य चन्द्रस्य चद्रोपलजललवैश्चद्ररश्मिसयोगजातैश्चन्द्रकान्तमणिप्रस्यंदजलकणैरर्घस्य घटना विधानं, यथा वा स्वकोयैः समुद्रसंबंधिभिरभोभिर्जलैः सलिलनिधेः समुद्रस्य सौहित्य-करणं तर्पण विधान तद्वत् एतन्निर्देशनिदर्शनत्रये यथा तदीयैरेव वस्तुभिस्तदाराधनं क्रियते तथा त्वदोयवाग्भिस्तव स्तवनमनन्यप्रतीकत्वादिति भावः, 'सौहित्यं तर्पणं तृप्तिरित्यमरः', अथ विष्वक्सेनपक्षे जननीना जोवानां वाचो जननोवाचस्तासामियमपि स्तुतिस्त्वदीयाभिरेव वाग्भिरिति । तथा चातर्यामितया त्वत्प्रेरणादेव वचोभिः सरंतीभिः शेषं निर्विशेषमिति भाष्यम् ॥१०२॥

मातः शिवे शिवविरञ्चिहरस्वरूपे,
दीने कृपामयि मयि प्रणते प्रसिद्धे ।
दुष्टं मदुक्तमपि ते चरणारविंदे,
विन्यस्तमस्तु सुधियां हृदये विशुद्धम् ॥१॥

अतिवासौ दुर्गा(—)नगभीराशयवती,
निगूढार्थग्राह्या बहुतररसानंदलहरी ।
अनायासेनास्यां यदि हृदि रुचिः पारगमने,
तदा धार्या धारैरलघुपदटीका तरिरियम् ॥२॥

न कर्तुस्तात्पर्यं यदपि यदुनाथेद्रिदुहितुः
प्रवृत्तस्य स्तोत्रे गुरुनिगदितोपासनवशात्
तथापी व्याकुर्वनहमनपराधोऽथ समलो,
यतो श्ये (    )गमयति यतोऽनन्यभजनम् ॥१॥

भवानि भक्तानां हृदयभवभावोद्भवकरी,
सदा विष्वक्सेनप्रवणहृदयानंदजननी ।
अभेदंती खेदं समभिदधती चेदभणिते-
रिय व्याख्या विद्वभरविरचिता स्यात्कृतिकृते ॥२॥

COLOPHON

संवत् १९१४ वर्षे शाके १७६६ लिखीतं चेला चनणमल गुरांसाऽर्थे ।

## 5496. सौन्दर्यलहरीस्तोत्रं सटीकम्

॥ श्री परमेश्वरजी ॥

OPENING

भगवान् परमकारुणिकश्रीशंकरावतारः श्री शंकराचार्य है सो शिवशक्ति के

अभेद जतायबेको चिच्छक्ति की स्तुति द्वारा मंत्रोद्धारादिवर्णमात्रापूर्वक स्तुति करते हैं—

अथ श्री सुवरलहर्य्यारंभ: ।।काव्य।।

शिव: शक्त्या युक्तो यदि भवति शक्त: प्रभवितुं,
न चेदेव देवो न खलु कुशलः स्पंदितुमपि ।
अतस्त्वामाराध्यां हरिहरविरञ्च्यादिभिरपि,
प्रणन्तुं स्तोतु वा कथमकृतपुण्य: प्रभवति ।।१।।

टीका—जन्म मरण अनेक क्लेश सचय करि बंध रहे, ऐसे तापत्रय रूपी अमगलकर रहित ऐसे परमात्मा सदा मंगलरूप हैं, ताकों कहिये शिव । क्योंकि चिद्विलाससमुल्लसित परमानंद रूप है तासों ऊ कहै शिव है, सो कर्त्तुमकर्त्तुं अन्यथाकर्त्तुं ऐसो जो शक्ति कहियै निज-सामर्थ्य-विशेष स्फूर्त्ति ता करि जद युक्त होत है तदि प्रभु होय । अर्थात् सर्वोत्कृष्ट होतु है । यों न होय तो कछु नाही क्योंकि ता शक्ति विनु किंचिन्मात्र चलनहू कों समर्थ नाही । ऊह देव देदीप्यमान है । परंतु कछु करि सकै नाही क्योंकि समस्त क्रियामूल शक्ति हां है यातें या कारणतें तो कों प्रणाम हू करिवे कों अरु तेरी स्तुति करिवे को अकृतपुण्य पुरुष है सो समर्थ नाही अर्थात् जन्मातर के बड़े सुकृत सें तेरे प्रणामादि में पुरुष की प्रवृत्ति होय क्योंकि तू तो हरिहरविरच्यादि करि उपासबे जोग्य है, और की कहा सामर्थ्य सो तेरी उपासना करैं, हरिहरविरंच्यादिभि:, इहा आदय शब्द करि कै मनुचद्रादि जानियै सो कह्यो है मानसोल्लास नाम ग्रंथ तद्वचनं—

विष्णु: शिवः सुरज्येष्ठो मनुश्चद्रो धनाधिप: ।
लोपामुद्रा तथाऽगस्त्य: स्कन्द: कुसुमसायक: ।।१।।
सुराधीशो रोहिणेयो दत्तात्रेयो महामुनि: ।
दुर्वासा इति विख्याता एते मुख्या उपासका: ।।२।।

हरिहरविरंच्यादि तेरी उपासना कहा करैं है कि अपने सृष्टि को अधिकार तेरे ही बल तें करै है, सब कारज मैं तू शक्ति ही मुख्य है शक्ति विना कछु होय नांही इत्यादि ......

CLOSING(w

प्रदीपज्वालाभिर्दिवसकरनीराजनविधि:,
सुधासूतेश्चद्रोपलजललवैरर्घघटना ।
स्वकीयैरम्भोभि: सलिलनिधिसौहित्यकरण
त्वदीयाभिर्वाग्भिस्तव जननि वाचा स्तुतिरियम् ।।१०३।।

CLOSING(Ct. हे जननि जैसे सूर्य की आरती करतु है तहां दीपन की ज्वाला सन्मुख करतु है, ऊह सूयं तो तेजनिधान है ताको अंस अगनि को दीपक तासों जैसे आरती करैं, अरु जैसे चद्रकांतमणि तैं चंद्रमा के जोग तैं जल प्रगटै, ऊ जल तें चंद्रमाकों अर्घ दीजे, अरु समुद्र के जलसों समुद्र को तर्पण करिये 'समुद्रास्तृप्यतु' यों कहि कै तर्पण करिये,

तैसे तेरी वाणी कर तेरी ही स्तुति ए भई है । अर्थात् मातृकास्वरूपिणी तू है । ताही को प्रपंच ए स्तुति है। स्तुति का कर्त्ता मैं शंकराचार्य नाहीं हूँ। परा, पश्यति मध्यमा, वैखरी, च्यारो ही वाणी रूपिणी मातृका रूपसो स्तुती की कर्त्ता तूं है। अरु अतर्यामी रूप तैं प्रेरक ही तूं ही है। या तैं तेरी स्तुती तैं ही नैं करी है। मैं तो कर्त्ता नाही हूँ, तैं हैं। अरु तेरी ये वाणी है तो निगम ही है। यातैं पूर्व श्लोक मैं प्रार्थना करी सो साभिप्राय भई। इत्यादि व्यंग्यार्थ: ।।१०३।।

छप्पय

नहि असत्य, नहि सत्य, नही पुनि सत्यासत्य हि,
नहि अनित्य, नहि नित्य, नही पुनि नित्यानित्य हि।
नहि अभिन्न, नहि भिन्न, नही पुनि भिन्नाभिन्न हि,
अैसो कोउक शक्ति वस्तु की अनिरवचन्न हि।
माया उदार काया त्रिगुण, रमा उमा वानी कला,
जगदम्ब भक्त-पालन-परा चिदानद-घन-निरमला ।।१।।

श्री शकर आचार्ज जू, श्रीशंकर अवतार।
माया ब्रह्म अभेद करि, वरनी श्रुति निरधार ।।२।।

तंत्र के अनुसार पुनि, श्रुति हू के अनुकूल।
स्तुति सुंदरलहरी करी, श्री शंकर तपमूल ।।३।।

शकरवानी के अरथ, वेद-वाक्य ज्यो गूढ़।
जिनकौं कैसे जानही, प्राकृत मानव मूढ़ ।।४।।

तथापि मत लख बुधन को, सप्रदाय अविरूद्ध।
भाषा टीका यह करी, शभुदत्त मतिशुद्ध ।।५।।

COLOPHON

इति श्री ज्योतिर्विच्छिवकृष्णसुतशभुदत्तकृत - सौदर्यलहरी भाषा सक्षेप टीका सपूर्ण ।।

संवत रस नग नाग शशि, ऋतु शरद् रसमास।
सित पख तिथ आठौ सहित, सोमवार शुभरास ।।१।।

Post-colophonic

वाचनार्थं पोसाख वाला बालकृष्ण ।। श्री जोधपुर मध्ये ।। श्रीरस्तु ।। कल्याण मस्तु ।।

## 5500. स्तवमाला

OPENING

श्री राधाकृष्णाभ्यां नम: ।।

श्रीमदीश्वररूपेण रसामृतकृता कृता।
स्तवमालाऽनुजीवेन जीवेन समगृह्यत ।।१।।

पूर्वं चैतन्यदेवस्य कृष्णदेवस्य तत्पर।
श्रीराधायास्तत: कृष्णराधयोर्लिख्यते स्तव: ।।२।।

विरुदावली ततो नानाछंदोभिः केलिसंहृतिः ।
ततविचत्रकवित्तानि ततो गीतावली ततः ॥३॥

CLOSING

वाचं वाचकमित्युदेति भवतो नामस्वरूपद्वयं,
पूर्वस्मात् परमेवहृत करुणं तत्रापि जानीमहि ।
यस्तस्मिन्नवहिता परार्धनिवहः प्राणी समंताद्भवे-
दस्येनेदमुपास्य सोऽपि हि सदानंदाबुधौ मज्जति ॥६॥
मुदिताश्रितजनार्त्तिराशये-रम्यचिद्घनसुखस्वरूपिणे,
नाम गोकुलमहोत्सवाय ते ब्रह्मपूर्णवपुषे नमो नमः ॥७॥
नारदवीणोज्जीवनसुधोर्मिनिर्यासमाधुरी ।
पुरा त्वं कृष्ण नाम काम स्फुर मे रसने रसेन सदा ॥८॥

इति श्रीकृष्णनामस्तोत्रम् ।

COLOPHON

इति स्तवमाला समाप्तम् ॥ श्रीगोविन्दो जयति ॥

Post-colophonic

संवत् १८२१ वर्षे मार्गसिर शुक्ल १० रविवासरे ॥ इदं पुस्तकं लिखितं माथुर ब्राह्मण सरूपरामेण ॥ वासी ग्राम रामगढ के ॥ जटवाडी के ॥ शुभं मंगल भवतु ॥ लेखकपाठकयोः मगल भवतु ॥

## 5502. उत्पलस्तोत्रम्

(स्तोत्रसग्रहः)

OPENING

ॐ नमः परमशिवाय ॥

ॐ अव्यस्तोत्रकाररचितचारुरचनाविशिष्टसग्रहस्तोत्र व्याकुर्मः, तत्र तु या वार्ता प्रयोगरूढिरिति सज्ञा पुस्तकेषु दृश्यते सा वैव्वावर्ती वार्तैव साक्षात्कारेण चिद्भैरवः समाऽविश्य व्युत्थानेऽपि बलवत्तरसस्कारात् तमभिमुखीभाव्य प्रतिभातं वस्तु विज्ञातुमाह ॥

CLOSING

विश्वत्रयेऽपि विशदैरसमस्वरूपैः, शास्त्रैः तथा विवरणैः प्रथितैव कीर्तिः ।
तस्माद्गुरोरभिनवात्परमेशमूर्तेः, क्षेमो निशम्य विवृति व्यतनोदमुत्र ॥

COLOPHON

इति श्रीमदुत्पलदेवाचार्यचक्रवर्तिविरचितायामद्वयसमावेशोत्कर्षदर्शपरमेशस्तोत्रावल्यां राजानकश्रीमदभिनवगुप्ताचार्यपादपद्मोपजीविश्रीक्षेमराजनिर्हिताद्वयस्तुतिसूक्तिविवृतिरियं सम्पूर्णेति शिवम् ।

समाप्ता चेयं उत्पलस्तोत्रावली टीका ॥ शुभम् ॥

अन्यस्तोत्राणां नामानि—

१. भक्तिविलासस्तोत्रम्
२. सर्वात्मपरिभावनस्तोत्रम्
३. प्रणयप्रसादस्तोत्रम्
४. स्वरसोद्वलनस्तोत्रम्
५. स्वबलनिदेशनस्तोत्रम्
६. अध्वविस्फारण ,,

| | |
|---|---|
| ७. विधु-रवि-जय- स्तोत्रम् | १४. जय- स्तोत्रम् |
| ८: अलौकिकरसोद्दलनस्तोत्रम् | १५. भक्ति- ,, |
| ६. स्वातन्त्र्यविजय- ,, | १६. पाशानुद्भेद- ,, |
| १०. अच्छेदमङ्ग- ,, | १७. दिव्यक्रीडाबहुमान- ,, |
| ११. श्रीसुभयविशसितस्तोत्रम् | १८. आविष्कार- ,, |
| १२. ,, ,, ,, | १९. उद्योतन- ,, |
| १३. सग्रह- ,, | २०. चर्वणा- ,, |

## 5585. आगमरहस्यम् (पूर्वार्धम्)*

OPENING

श्रीगणेशाय नमः ॥

गजाननं विघ्नहरं गणार्चितपदाम्बुजम् ।
सेवित सिद्धिबुद्धिभ्यामनिशं श्रेयसे श्रये ॥१॥

CLOSING

तथापि तुष्टिमायातु मत्कृतैः साहसैरलम् ।
शिष्टा यदपि सर्वज्ञास्तथापि शिशुलीलया ॥
मुदमादधते चित्ते यदानदमया हि ते ।
गुरुणा लक्षितं यच्च दृष्ट यच्चागमादिषु ।
तत्रत्य सारभूत यदुत्तरार्द्धे लिखाम्यहं ॥
आत्मानदप्रबोधाय विनोदाय महात्मनाम् ।
सरस्वत्यानदनाथो दुर्गानदपदाश्रितः ।

COLOPHON

इति श्रीमदागमरहस्ये सत्सग्रहे द्विवेदिवंशोद्भवसाकेतपुरप्रांतस्थायिसरयूप्रसाद-विरचिते योगाङ्गकथननाम्नाष्टविंशः पटलः समाप्तः पूर्वार्द्धः ।

Post-colophonic

सं० १९५१ चैत्र कृष्ण ११ लिपिकृत ब्राह्मण पाराशर बालाबकस शुभं, श्लोक-संख्या ६२६४ ॥

*This work has since been published by the R. O. R. I.

## 5589. कौलरहस्यशतकम्

OPENING

श्रीगणेशाय नमः ॥ श्रीगुरुभ्यो नमः ॥

कुलारविंदादकुलारविन्द, प्रविश्य चन्द्रस्य सुधां निपीय ।
स्वस्थानमन्विष्य पुनः प्रयाति, श्रीसुदरी संततमाश्रयामि ॥१॥

मनोभवे मंगलरूपमुद्रां, सौन्दर्यलक्ष्म्या इव वैजयन्तीम् ।
श्रीसुंदरीमिन्दुकलावतंसा-मानन्दनिष्यन्दमयी स्मरामि ॥२॥

श्रीसुदरीतर्पणतत्पराणां, हालामदाघूर्णितलोचनानाम् ।
अस्माकमानन्दितमानसानां, माहेश्वराणां दिवसाः प्रयान्तु ॥३॥

CLOSING

नरोत्तमारण्यमुनीन्द्रशिष्यो, महानुभावस्तरुणीकवीन्द्रः ।
पीठाय पूजावसरे कृतं यद्-रहस्यमेतत् कुलधर्मभाजाम् ॥९८॥
एकेन शुष्कवटकेन घटं पिबामि, कुंभं पिबामि सततं लवणार्द्रकेन ।
आस्वादनाय यदि हास्यसि शुद्धिखंडे, गंगां पिबामि यमुनां सह सागरेण ॥९९॥
मीन भुक्ते विचरति सदा कन्यया कामचारो,
वार वारं भजति च पुनर्वारुणीमगनास्ताः ।
उच्चैरस्ताचलशिखरतः पातयिष्यं स्वदेहं
प्रायश्चित्त तदनुचरते जीवतां यो द्विजेन्द्र. ॥१००॥

COLOPHON

इति श्रीनरोत्तमारण्यमुनीन्द्रशिष्यतरुणीऋषि-प्रणीतं कौलरहस्यशतक सम्पूर्णम् ।

## 5593. गन्धोत्तमानिर्णयः

OPENING

श्रीगणेशाय नमः ॥ ॐ नमः श्रीमद्गुरवे ॥

ध्यात्वा श्रीत्रिपुरां हृदब्जकुहरे नत्वा गणेशं गुरून्
श्रीविश्वेश्वरसंज्ञक स्वजनकं वेदागमार्थानुगम् ।
मन्वादीन् स्मृतिसंग्रहप्रकरणान् दृष्ट्वा पुराणास्तथा
कुर्वेऽहं गुरुसेवको लघुतरं गन्धोत्तमानिर्णयम् ॥१॥

परमकारुणिकेन महेश्वराचार्यवर्येण श्रीगुरुणोपदिष्टः कुलधर्मानभिज्ञसर्वशास्त्र-निपुणः कश्चिच्छिष्यः संदिहानो मोक्षमार्गाभिलाषी ससारभयभीतश्च जननमरणाकुलं संसारमसारं ज्ञात्वा श्रीगुरुमभिसृत्य भक्तिपूर्वं प्रणिपत्याह—

CLOSING

संदिग्धसंदेहभंजनमुद्गरं च, ग्रंथं गुरोस्सेवको विमलं स चक्रे ।
एनं सुधी सेवको गुरुतः सुष्ठु दृष्ट्वा, सदिग्धसदेहभजनमुद्गरोऽस्तु ॥

**COLOPHON**

सिंहस्थे द्युमणौ गुरौ घटगते मासे नभस्याभिधे,
मदे ह्य(?) तिथौ विद्योतिनि गते पक्षे शुभे मेचके ।
शाके विक्रमभूपतेः परिमिते द्व्याभ्राष्टजैवात्रकै-
विप्रप्रार्थनया समाप्तिमगमद्गन्धोत्तमानिर्णयः ॥

मिति शिवं ॥ संपूर्णं शुभमस्तु ॥

## 5594. गायत्रीरहस्यम्

OPENING

श्रीगणेशाय नमः ॥ श्रीकृष्णाय नमः ॥

ॐकारममृतं ब्रह्म शिवमक्षरमव्ययम् ।
यमामनन्ति वेदेषु त प्रपद्ये विनायकम् ॥१॥
श्रीसूर्यः श्रीनिवासश्च श्रीकंठः श्रीश्वरीगणौ ।
परमात्मा गुरुर्हंसः सोऽहमित्याश्रये धिया ॥२॥

ॐकारवृषसंयुक्ता त्रैलोक्यवेदवल्लभा ।
गायत्री कामगौसेव्या धर्मकामार्थमोक्षदा ।।३।।

CLOSING

१ सामवेदं तर्पयामि २ मङ्गल तर्पयामि ३ विष्णुस्वरूपिणीं तर्पयामि ४ परमात्मानं तर्पयामि ५ सरस्वतीं तर्पयामि ६ वेदमातरं तर्पयामि ७ सांस्कृतिं तर्पयामि ८ संध्यां तर्पयामि ९ स्थविरां तर्पयामि १० वैष्णवी तर्पयामि ११ उषसं तर्पयामि १२ निर्मृजि तर्पयामि १३ सर्वार्थसिद्धिकरीं तर्पयामि १४ सर्व-मंत्राधिपतिं तर्पयामि १५ ॐ भूर्भुवः स्वः पुरुष तर्पयामि ।

इति तर्पणं कृत्वा नत्वा गुर्वादिनामतः ।

COLOPHON

इति श्री गायत्रीरहस्यं सायं संध्योपासनानंदोदयो नाम दशमोऽनुभवः ।
लिखितमिदं नाथनगरे संवत् १९०७ के फा० सुद ४, श्यामनाथशर्मणः ।

## 5600. तन्त्रसिद्धान्तः

OPENING

श्रीनाथचरणाम्भोजमानम्य श्रेयसे प्रभोः ।
विमर्शानन्दनाथेन तंत्रसिद्धान्तमीर्यते ।।१।।

अथ तांत्रिकमते किं ब्रह्म, कथं सृष्टिः, कति पदार्थाः, कोऽयं वादः, कीदृशी उपासना, कश्च मोक्ष इत्युच्यते । शिवशक्त्यात्मरूपे ब्रह्मणि शाश्वत इत्यादि वचनपर्यालोचनया शिवशक्तिसामरस्यात्मकवस्तुविशेषरूप ब्रह्मेति निश्चीयते । एतच्च श्रीनाथ-मुखादवगन्तव्यम् ।।

CLOSING

तत्र भोगः शिवपदाभोजयुगार्चना भुक्तिश्च मुक्तिश्च करस्थितैवेति वचनपर्यालोच(न)या ऐहिकनानाविधोपभोगपूर्वकशिवशक्तिसामरस्यात्मकब्रह्मैक्यानन्दानुभव-रूप मोक्षमाप्नोति इत्यय मार्गो वामपदेनोच्यते । कापालिकमार्गस्तु सिद्धान्तपदेनोच्यते । तच्च पूर्वमीमांसावत् कर्मकाण्डरूप एतच्च उत्तरमीमांसावत् ज्ञानकाण्डरूप-मिति तयोरभेदः । इति । तदुक्तं कुलार्णवे :—

सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परं ।
वैष्णवादुत्तमं शैव शैवाद्दक्षिणमुत्तमम् ।।१।।
दक्षिणादुत्तम वामं वामात् सिद्धान्तमुत्तमम् ।
सिद्धान्तादुत्तम कौल कौलात्परतर न हि ।।२।।

CLOSING

इति विमर्शानन्दनाथविरचितं तन्त्रमततात्पर्यार्थं समाप्तम् ।।

## 5602. ताराभक्तिसुधार्णवः

OPENING

श्रीगणेशाय नमः ।।

एषा कापि न कामिनी त्वदपरा मन्मूर्द्धनि स्वर्धुनी
कांते कोपममुं निरस्य निपुणं पश्येति पद्मोदिता ।

आलोक्य प्रतिबिंबितां सुललितां तत्र स्वकीयां तुनं,
गौरी श्वेतमुखी सखीषु विनमन्नेत्रा जगत्त्रायताम् ॥१॥
कामे कांतविलोचनानलहृते प्रोद्भूतकोपत्रयं,
भास्वद् भास्वरदक्षिणे क्षणरुचि: व्यक्तप्रसादोदयम् ।
कांते त्वद्विपरीतकेलिकलित कामानलेनान्वितं,
कर्णाऽलंबितकेशमीक्षितशिव कान्तं तमोद्धे महः ॥२॥
यथा काली तथा तारा कालिकैव सा, उभयोर्नहि भेदोऽस्ति,
इति गंधर्वतंत्रवचनात् कालीविधिरपि निरूप्यते ।

CLOSING

ज्ञानं दत्ता दुराराध्यं दुर्लभ यत्सुरैरपि,
ततः प्रीत्या वर लब्ध्वा (–)च सयुतम् ॥
उवाच प्रीतमनसा शापात्त मत्रसंकटे,
मातः क्रोधेन कथितं तत्रोपायमहं वदे ॥
प्रभावं पूर्वमुद्धृत्य घोररूपे च दक्षिणे,
सिद्धि कुरु द्वय प्रोच्य कालिकेति पद ततः ॥
महाभीष्टफल शीघ्रं देहि द्रविणसंपदं,
जपादौ मत्रमुच्चार्य जपांते च पुनः पठेत् ॥
भविष्यति ततः सिद्धिरचिरात्परमेश्वरि ॥

COLOPHON

इति श्रीमहामहोपाध्यायठक्कुरनरसिंहविरचिते ताराभक्तिसुधार्णवे पंचदश-स्तरंगः ॥

Post-colophonic

गणेशस्य प्रिय मद्यं मांसं श्रीभैरवस्य च,
मीनः सूर्यस्य विज्ञेयो विष्णोर्मुद्रा प्रकीर्तिता,
शक्तेस्तु मैथुनं प्रोक्त तथा पूर्वचतुष्टयं ॥
इति रुद्रयामले तंत्रविधिः समाप्ता ।

## 5603. तारारहस्यतत्वबोधिनी-वासना-टीका

OPENING

श्रीगणेशाय नमः ॥

ऊर्जितानंदगहनां सर्वदेवस्वरूपिणीं ।
परां वाग्रूपिणीं वन्दे महानीलसरस्वतीम् ॥१॥
स्वप्रकाशविमर्शात्मबीजाद्यङ्कुररूपिकां
पूर्णाहंतामयीं वन्दे महानीलसरस्वतीम् ॥२॥
नीलतंत्रसमाम्नाय सिद्धसारस्वतं परं,
नीलतंत्रं मत्स्यसूक्त गान्धर्वं भैरवी तथा ॥३॥
गुरूणां च मतं ज्ञात्वा गुरुभिः सिद्धभूमिकां,
कृता श्रीशंकरेणैषा तारारहस्यवृत्तिका ॥४॥

CLOSING

मंजुला कविता-सिद्धिः सर्वभाषामयी भवेत् ।
वादादिषु च सर्वत्र देवतात्मा सुखी भवेत् ॥

सकलजननीस्तोत्रेऽनुभवो यथा—

आनदलक्षणमनाहतदेहनाम्नि,
नादात्मना परिणत तव रूपमीशे ।
अन्तर्मुखेन मनसा परिचीयमानः,
शंसति सतसलिलैः पुनः का च धन्या ।

अथामृतसिद्धौ च त्वया परमं ध्यानं मनसो वृत्तिशून्यता मौनं सत्यजपः साक्षाभिः-क्रिया सत्क्रिया जायते ॥

महिम्नः स्तोत्रे :—

मनः प्रत्यक्चित्ते सविधमवधायत्तमरुतः,
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सगितदृशः ।
यदालोक्याह्लाद ह्रद इव निमज्यामृतमये,
दधत्यन्तस्तत्त्वं किमपि यमिनस्तत् किल भवान् ॥
अविश्वासो न कर्तव्यो यथाशास्त्रं समीरितम् ।
द(लं)बोदरस्य सूत्रेण कमलाकरसूनुना ।
अकारि शंकराचार्यो वासनातत्वबोधिनी

COLOPHON

इति श्रीतारारहस्यवृत्तौ पंचदशः पटलः ॥

संवत् १७८८ आश्विन पचम्या ॥

## 5606. पुरश्चरणकौमुदी

OPENING

श्रीगणेशाय नमः ॥

श्रीकृष्णचरणद्वंद्वमाधाय हृदयाम्बुजे ।
क्रियते कृष्ण(तो)षाय पुरश्चरणकौमुदी ॥१॥

इह खलु— पुरश्चरणसंपन्नो मंत्रो हि फलदायकः ।
किं होमैः किं जपैश्चैव किं मंत्रन्यासविस्तरैः ॥२॥
रहस्यानां हि मंत्राणां पठित्वा स्यात् तत्परक्रिया ।
पुरस्क्रिया हि मन्त्राणां प्रधानं वीजमुच्यते ॥३॥

CLOSING

व्याहृतिभिर्व्यस्तसमस्ताभिस्तिसृभिः कपिजलाधिकरणन्यायादिति तेनाहुतिपंचकं ज्ञेयं, उक्तं पंचनारायणीये पंचभिर्मनुभिर्हुतेति तथा प्रपचसारे—

गर्भाधानादिको वह्नौ सुमुद्वाहावसानकाः,
क्रियास्तारणे वै कुर्यात् आज्या हुत्यष्टकैः पृथक् ॥

गर्भाधानादिकानाह शारदातिलके—गर्भाधानं पुंसवनं सीमंतोन्नयन पुनरिति ।

तथा वायवीयसंहितायां—

जातं ध्यात्वैवमाकारं जातकर्म समाचरेत्,
नालापनयनं कृत्वा ततः संशोध्य·········।
( Incomplete )

## 5620 महार्थमंजरी

OPENING

ॐ श्रीगुरुचरणसरोरुहमकरंदषट्पदवृन्देभ्यो नमः।
ॐ जयत्यामूलसस्थानमौरारं तत्त्वमव्ययम् ।
स्पन्दास्पन्दपरिस्पन्दमकरदमहोत्पलम् ॥१॥

CLOSING

ईदृशं हृदयबीजं तत्वतो यो वेद समाविशति च स परमार्थतो दीक्षितः प्राणान् धारयंल्लौकिकवद्वर्तमानो जीवन्मुक्त एव भवति, देहपाते श्रीपरमशिवभट्टारक एव भवति। पराप्रवेशिका समाप्ता।

COLOPHON

कृतिरियं श्रीमहामाहेश्वराचार्यवर्याभिनवगुप्तपादपद्मोपजीविनः श्रीक्षेमराजस्येति शिवम्।।

## 5624. यंत्रचिंतामणिः

OPENING

श्रीगणेशाय नमः ॥

य ध्यायन्त्यमुराः सुराश्च निखिला यक्षः पिशाचोरगाः,
राजानश्च तथा मुनीन्द्रनिवहाः सर्वार्थदं सिद्धये।
भक्तानां वरदाभयप्रदकरं पाशांकुशालङ्कृतं,
चचच्चामरवीज्यमानमनिशं सोऽहं श्रये शंकरम् ॥२॥
बभार दु:स्था(न)मुनिपुंगवान्यो, बुध्या च मन्त्रैश्च दुरामदौजाः।
जाज्वल्यमानं दिवि दृश्यते यः, स भार्गवो मामवताच्छरण्यः॥३॥

CLOSING

वश्याभिधानं प्रथमं द्वितीयमाकर्षणं स्तम्भकरं तृतीयम्।
विद्वेषणं मारणकं ततश्च, उच्चाटनं शान्तिकरं च सत्यकम्॥८॥
वदिप्रसादिजनकं तु महाप्रभावमत्यंतमुच्चाटनकं वदति।
अष्टाधिकारं प्रतिहति कल्प-चिंतामणौ देववरैश्च पूजितम् ॥९॥
स्वर्गाच्च्युतस्य (दु)र्भाग्यवतश्च पुंसः, पुण्याधिकस्य बहुयोगयुतस्य लोके।
·····················································॥१०॥

COLOPHON

इति श्रीयंत्रचिंतामणौ दशमपीठिकायां प्रत्यक्षसिद्धिप्रदे उमामाहेश्वरसंवादे दामोदरपंडितोद्धृते यंत्रचिंतामणिः समाप्तः।

यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया,
यदि शुद्धमशुद्धं वा मम दोषो न विद्यते ॥

Post-Colophonic

पुस्तकमिदं द्रोणोपाख्य-हरीकृष्णदीक्षितस्येदं लिखितं जयपुरे समये आषाढ़-कृष्ण १२ रवौ तद्दिने समाप्तिमगमत् ॥ संवत् १८६६ शाके १७२७ ॥

## 5627. वर्णबीजप्रकाशः

OPENING

श्रीगणेशाय नमः ॥

नमामि सकलाम्नित्याम्परमाम्निष्कलाङ्कलाम् ।
चराचरजगद्धात्रीमरुणां कामरूपिणीम् ॥१॥

अकारादिक्षकारान्तवर्णवैभवविग्रहाम् ।
वाङ्मयीं गुरुरूपान्ताम्मातृकां श्रेयसे श्रये ॥२॥

ग्रन्थानालोक्य सुबहूंस्कादिहादिमतानुगान् ।
सरस्वत्यानन्दनाथो दुर्गानन्दपदाश्रितः ॥३॥
श्रीमज्जयपुराधीशरामसिंहेन सत्कृतः ।
दुर्गाप्रसादसम्प्राप्ततत्वस्संकेतसारवित् ॥४॥

वर्णबीजप्रबोधार्थम्वर्णबीजप्रकाशकम् ।
वर्गवर्णक्रमेणेह करोति विदुषाम्मुदे । ५॥

CLOSING

वर्णबीजप्रकाशोऽयम्वर्गवर्णक्रमेण वै ।
पूर्णतामगमद्भूयाद्विदुषान्तुष्टिदः शुभः ॥४२॥

राधाकृष्णतनूद्भवो वसुमतीदेवो द्विवेदी गिरा,
सारज्ञः सरयूप्रसाद इति यः श्रीमत्ययोध्यापुरि ।
सोऽय सश्रित उत्तमे जयपुरे श्रीरामसिंहप्रभु-
स्वद्र्ङ्ग्रन्थमिमम्मनोहरतर जग्रन्थ वीरप्रियम् ॥४३॥

भूतानलाङ्केन्दुमिते विक्रमादित्यवत्सरे ।
वर्णवीजप्रकाशोऽय समाप्तो वितनोतु शम् ॥४४॥

सन्धि-स्पर्श-सुबन्त-तद्धिततिङन्ताद्यैः कृदन्तादिभि-
र्वर्णैर्वैविविधैश्च सिद्धवपुषं सिद्धान्तमृक्सामगम् ।
हर्षादिक्षु धनुः सुपुष्पविशिखं देवीन्दधानाम्भजे,
फुल्लाऽम्लानजपारुचिस्त्रिनयना कोट्यंशुमालीप्रभाम् ॥४५॥

COLOPHON इति श्रीदेशिकार्यश्रीदुर्गानन्दनाथचरणकमलमधुकरेण सरस्वत्यानन्दनाथा-परनाम्ना द्विवेदिवंशोद्भवसत्पण्डितराधाकृष्णसुतेन सरयूप्रसादशर्म्मणा कृतोऽयम्वर्ण-बीजप्रकाशो नाम मातृकाबीजकोशः समाप्तः । शुभम् ।

संवत् १९५४ वैशाख शुक्लः ८ ॥

## 5633. श्यामार्चनमञ्जरी

OPENING

श्रीगणेशाय नमः ॥

श्रीगुरुगणपतिवटुकशारदेष्टदेवताभ्यो नमः ॥

प्रणम्य दक्षिणां कालीं सृष्टिस्थितिलयात्मिकाम् ।
वक्ष्ये तस्याः सपर्यां वै सम्प्रदायानुसारतः ॥१॥

आनन्दानन्दनाथस्य नत्वा पादाबुजद्वयं ।
साधकानां हितार्थाय वक्ष्ये पद्धतिमुत्तमाम् ॥२॥

ब्राह्मे मुहूर्ते उत्थाय बद्धपद्मासनः कुलवृद्धं प्रणम्य स्वशिरसि श्वेतसहस्रदलकमल-कर्णिकामध्यवर्तिचंद्रमण्डलान्तर्गतं स्वगुरुं ध्यायेत्, यथा—

रक्तं रक्तविलेपमाल्यवसनं वामेन रक्तोत्पलं,
बिभ्रत्या प्रिययेतरेण तरसा श्लिष्टं प्रसन्नाननम् ।
हस्ताभ्यामभयं वरं च दधतं शम्भुस्वरूपं परं,
ह्यानंदांकितलोचनोत्पलयुगं ध्यायेच्छिरस्थं गुरुम् ॥

CLOSING

स्वात्मानं कामकलारूपं विभावयन् सुखं विहरेत् ततः पानभेदफलोल्लसत्प्रमाण-स्थितिलक्षणानि यथाशास्त्रं गुरुमुखाद् ज्ञात्वा पानचर्वणशक्तिसयोगादिभिर्यथा विहरेत् ।

COLOPHON

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीअनारगिरिशिष्यलालभट्टकृतौ श्यामार्चनमञ्ज-र्यां द्वादशः स्तबकः । १२ । श्यामार्चनपद्धतिः समाप्ता ।

Post-colophonic

मिति माग० कृष्णा ५ चंद्रवासर कालुरामजी पठनार्थं लखि हीरालाल महता नागर साठोदरा जोधपुरा मध्ये ॥

## 5634. श्रीविद्याटीका

OPENING

श्री सदानन्दसिद्धये नमः ॥

अगस्त्यटीका ॥ इह खलु भगवान् सकलविद्यानिधिर्बहुविधिशाखामयऋग्यजुस्साम-परिछिन्नचिच्छक्तिरकलासमावेशतरंगितहृदयो हयग्रीवरूपी महाविष्णुः सकलज्ञान-तपोनिधये परमसच्चिदानंदघनचिच्छक्तिरूपं प्रवृत्तेऽगस्त्याय महामुनये अनेकविधशाखा-ऋग्यजुस्सामशाखानां अनेकसूपनिषत्सु तत्र तत्र विद्यमानरहस्यार्थविबोधस्य दुरव-गाहकत्वात् ॥

CLOSING

इयमेव विद्या सर्ववेदेषु सर्वात्मकचैतन्यात्मकत्वेन गूढतयोच्यते, अतः शैववैष्णव-गाणपत्यसर्वमंत्रेष्वपि सयोज्योपास्यते । अत एव सकलपुरुषार्थावाप्तिपूर्विकात्मज्ञान-प्रकाशत्वेन जीवब्रह्मसमरसीभावरूपमोक्षसाधिनीं हयग्रीवाल्लब्ध्वा सकलमिदमाद्यम-नुचरं कृता टीका । अगस्त्यप्रथितमहिमाऽगस्त्यमुनिना कलातत्वोद्भासिपरिमित-भाग्योदयकरी त्रयीसारं उद्धृता सदुपकारात्सुधिया ॥ छ । छ ॥

COLOPHON

इति श्रीपरमशिवागस्त्यमहाऋषिणा विरचिता श्रुतिसारसमुद्धृता विद्याटीका समाप्ता ॥ छ ॥ छ ॥ छ ॥

## 5636. सर्वार्थकल्पद्रुमः

**OPENING**

श्रीगणेशाय नमः ।।

श्रीनाथाङ्घ्रिकञ्जद्वन्द्व - रजोभूतिमदव्ययम् ।
तनुतां विमलं चेत्यं भक्तहृत्कल्पभूरुहम् ।।१।।

श्रीपराम्बापदाम्भोजयुगं नौमि सुखास्पदम् ।
प्रत्यूहव्यूहशमनं स्वान्तध्वान्तविनाशनम् ।।२।।

श्रीदुर्गानन्दसङ्कलितलब्धकृत्या-पदाम्बुजम् ।
पराप्तभीमपञ्चास्य प्रणमामि पुनः पुनः ।।३।।

प्राथर्वणम्महाकृत्या सूत्तमां गिरं सञ्चयन् ।
नवव(स)र्गात्मक सार्धं सोद्धारं सप्तभोगकम् ।।४।।

**CLOSING**

अज्ञानतो ज्ञानतो वा कृत्स्नविद्यासु बुद्धिमान् ।
न कष्टम्प्राप्नुयाद् धीरो नैव तस्य पराभवः ।।

क्षीराहारी जपेन्नित्यं ऋषिर्भवति निश्चयः ।
सर्वपाप विधूयेह ऋषिवत् प्रवरो भवेदिति ।। दिक्

वेदाग्नि-नन्द-भू-हीन-वर्षे वैक्रमिके शुभे ।
मार्गे कृष्णे बुधेऽष्टम्यां लेखोऽय पूर्णतामियात् ।।

कल्पान्यालोच्य लक्ष्माणि विमृश्य गुरुप्रक्रियाम् ।
यावल्लब्धं यामलेषु यथाशास्त्रं यथामतिः ।।

साधकानां हि सर्वार्थप्राप्तये कल्पभूरुहः ।
संग्रहो ग्रथितोऽस्माभिस्तेन प्रीणातु श्रीशिवा ।।

निगमार्णवसद्रत्नकल्पभूरुहवाक्शुभैः ।
पूजिता गुरवोऽमन्दम्मञ्जुल वितरन्तु नः ।।

राधाकृष्णतनूद्भवो वसुमतीदेवो द्विवेदी गिरां,
सारज्ञस्सरयूप्रसाद इति यच्छ्रीमत्ययोध्यापुरि ।
सोऽयं सञ्चित उत्तमे जयपुरे श्रीरामसिंहप्रभु-
स्वद्र् ङ्ग्रन्थमिमम्मनोहरतरञ्जग्रन्थ सर्वार्थदम् ।।

**COLOPHON**

इति श्रीमत्साकेतपुरस्थायिद्विवेदिवंशोद्भवराधाकृष्णतनूद्भवेन सरयूप्रसादशर्मणाऽपरनाम्ना श्रीमद्देशिकवर्य्यश्रीमद्दुर्गानन्दनाथचरणसरोजान्तेवासिना सरस्वत्यानन्दनाथेन संगृहीतस्सर्वार्थकल्पद्रुमः ।। समाप्तः ।

संवत् १९३४ ।

## 5638. सौभाग्यकल्पद्रुम:

OPENING

श्रीगणेशाय नमः :

गुरोः कटाक्षवीक्षाख्यां दीक्षां प्राप्य तु यत्कृपाम् ।
साधकः शिवरूपः स्यात्तामम्बां संश्रये सदा ॥१॥

अथ पूर्वोक्तानुष्ठानयोग्यतासिद्धये दीक्षाविधिर्निरूप्यते—

शांतो ह्यलुब्धः सदयः सुकृत्यागमतत्त्ववित् ।
पूर्वाश्रमी परो वर्णः शूद्रो नैव गुरुर्भवेत् ॥२॥

दृढभक्तियुतः शांतः कृत्योत्साही स्वलुब्धकः ।
दीर्घसेवायुतः स्वच्छः स्वांतः शिष्यो भवेच्छुचिः ॥३॥

वैशाखे कार्तिके चाश्वे माघे श्रावणके शुभे ।
मार्गशीर्षे चाश्विने च चैत्रे मध्याः प्रकीर्त्तिताः ॥४॥

CLOSING

आदावेव तु पूज्याः स्युर्मण्डले शिवरूपिणः ।
शास्त्रगुर्वाज्ञया सर्वं सफलत्वाय कल्पते ॥४०॥

अन्यथा विफल सर्वं भस्मनीव यथा हुतं ।
अयं हि परमो योगः कौलमार्गो महेश्वरि ॥४१॥

असिधार्यव्रतसमः मनोनिग्रहहेतुकः ।
स्थिरचित्तस्य सुलभः सफलस्तूर्णसिद्धितः ॥४२॥

अन्यस्य विफलो दुःखहेतुः स्यात्परमेश्वरि ।
एवमुपासकधर्मान् ज्ञात्वा उपासीतेति शिवम् ॥

COLOPHON

श्रीमाधवानन्दनाथकृते सौभाग्यपूर्वके ।
कल्पद्रुमे समभवत् स्कंधो दीक्षाफलानतः ।
इति श्रीसौभाग्यकल्पद्रुमे चतुर्थस्कधः ॥ शुभं भवतु ।

## 5639. सौभाग्यरत्नाब्धिः

OPENING

श्रीगणेशाय नमः ॥

अथ दीक्षाविधिः, तत्रादौ तदङ्गभूतमण्डपादिरचनार्थं प्राच्यादिदिक्परिज्ञानस्यावश्यकत्वात् तत्परिज्ञानप्रकारः प्रदर्श्यते । तत्र मेघाद्यनावृतसूर्ये निर्मलनभोमण्डले दिवसे वृक्षप्रासादाद्यनावृते भूप्रदेशे जलयंत्रादिभिर्दर्पणोदरवत्सुसमीकृते भूतले क्वचिद् बिन्दुकृत्वा तदवष्टंभतः प्रतिदिशं द्वादशाङ्गुलमानेन वृत्तं निष्पाद्य तत्र षडङ्गुलमानपरिणाहमूलमुत्तरोत्तरपरिणाहापचयेन सूचीमात्रकृताग्रपरिणाह ऋज्वाकृति शङ्कु-द्वादशाङ्गुलोच्छ्रायसहित वृत्ताकारं शिल्पिवरेण निर्मितं......।

CLOSING

लक्षण तु भविष्यपुराणे—

पलद्वय तु प्रस्तुत द्विगुणं कुडव मत,
चतुर्भिः कुडवैः प्रस्थः प्रस्थचत्वारि आढकः ।

आटकैस्तैश्चतुर्भिश्च द्रोणस्तु कथितो बुधैः,
कुम्भो द्रोणद्वयात्सूक्तः खारीद्रोणस्तु षोड्शः ॥

COLOPHON

इति श्रीविद्यानन्दनाथेन शिवयोः प्रियसूनुना ।
कृते सौभाग्यरत्नाख्यावष्टाविंशतरंगकः ॥

इति अष्टाविंशस्तरंगः ॥

श्री शुभं भवतु । कल्याणमस्तु ।

## 5717. स्फुटपत्रसंग्रहः

It is a collection of stray leaves on mescelleneous subjects eg. Tantras, Mantras, Yantras, in various writings. The arrangement is irregular and writing indistinct. A few names are vivid as under:—

१. अनिट्कारिका,
२. विजयाशोधनमंत्र,
३. षोडशोपचारविष्णुपूजनम्,
४. काकरुत-विचारः,
५. श्वेतार्कादिकल्पाः,
६. विष्णुपञ्जरस्तोत्रम् etc.

## 5752. कल्पसंग्रहः

OPENING

श्रीगणेशाय नमः ।

श्रीश्वेतार्ककल्पो लिख्यते ।

श्वेतार्ककल्पं वक्ष्यामि सर्वकर्मकरं शुभम् ।
सप्तमीपुष्यनक्षत्र-सूर्यपुत्रेण धीमता ॥१॥

ततश्चोत्पाटयेत्तं च बलिं दत्वा सगोघृतां ।
गन्धं पुष्पं च दीपं च धूपं च फलपूजनम् ॥२॥

मंत्रैः कृत्वा समुद्धृत्य श्वेतार्कं पूजयेत्ततः ।

इदं मंत्रं ॥ ॐ नमो भगवते सूर्याय ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः । ॐ सं जूं स्वाहा
अनेन मंत्रेण मंत्रयित्वा समुद्धरेत् । अनेनैव प्रकारेण विधिं समापयेत्

CLOSING

गुरुविद्यागुरुद्वेषी देवनिन्दापरायणः ।
दीर्घरोषी महादुष्टः पंच हित्वा परो नरः ॥२४॥

तस्य यंत्रं न दातव्यं प्राणैः कंठगतैरपि ।
चेद्दीयते तदा नित्य पापभागी नरो भवेत् ॥२५॥

दद्या निरूप्य मुद्राभिः भिन्नमषीभाजनं ।
ततस्तथा लेखकस्य कारयेद् रूपपट्टिकाम् ॥२६॥

लेखकाय च सौवर्णी लेखनी प्रददाति च ।
यथाम्नायं कारयित्वा यक्षकर्दमवारिणा ॥२७ ।

विजयाख्यमिदं यंत्रं पत्रे वा रूप्यपट्टके ।
कारयित्वा शुभे घस्रे धारयेद् होमपत्रकम् ।।२८।।

COLOPHON इति विजययंत्रस्य कल्पं संपूर्णम् । लिखित लेखक व्यास मेघराज । लि० नागोर मध्ये । ठो० माही दरवाजा बांठिया की पोल । संवत् २००४ का वैशाख सुदी १ मंगलवार शुभमस्तु ।।

## 5928. बालापञ्चबाणप्रयोग:

OPENING श्रीगणेशाय नम: ।।

।। अथ बालापचबाण-(प्रयोग:)

श्रीपार्वत्युवाच— देवाधिदेव देवेश महारुद्र नमोस्तु ते ।
इदानी श्रोतुमिच्छामि बालाबाणस्य लक्षणम् ।।१।।

श्रीमहादेव उवाच— लक्षं वारसहस्राणि वारितासि पुन: पुनः ।
स्त्रीस्वभावान्महादेवि पुनस्त्वं परिपृच्छसि ।।२।।

अत्यतगोपनीयं च बालाबाणस्य लक्षणम् ।
अथ वक्ष्ये बाणविद्यां बालिकाया: सुदुर्ल्लभाम् ।।३।।

यस्य विज्ञानमात्रेण कर्त्ता हर्त्ता सदा शिवः ।
दामोदरश्चद्रयुक्ता आद्यं वाग्बीजमीरितम् ।।४।।

CLOSING य इद बलिपूजायां तत्कार्यार्थसिद्धये ।
तस्य वै कार्यसिद्धि: स्यात् नात्र कार्या विचारणा ।।१।।
स एव साधक: श्रेष्ठः बालाभक्तो न सशय: ।
चिरजीवी भवेत् सोऽपि बालाबाणस्य धारणात् ।।२।।
त्रिपु लोकेषु विख्यात: शत्रुपक्षक्षयकर: ।

COLOPHON इति श्रीरुद्रयामले तत्रे चिंतामणिप्रयोगे ईश्वरपार्वतीसंवादे बालापंचबाण: संपूर्णम् ।।

## 5930. बालापूजनपद्धतिः

OPENING श्रीगणेशाय नम: ।।

अथ पूजनम् ।। स्ववामे त्रिकोणवृत्तं चतुरस्रात्मकं मडलं विलिख्य । जलकलशाधार-मंडलाय० इति संपूज्य अस्त्रक्षालितमाधार सस्थाप्य वह्निमडलाय धर्मप्रदसकलात्मने श्रीबालाया: जलकलशाधाराय । तत्र अस्त्रक्षालितं पात्रं सस्थाप्य । अ० अर्कमंडलाय वसुप्रदद्वादशकलात्मने श्रीबालाया: जलकलशाय इति सपूज्य ।

CLOSING (द)शांश शतांशं सहस्रांशं वा तच्चरणोदकेन सार्द्धं समर्पयेत्तत: ततो निर्माल्यपुष्पां-जलिमादाय लेह्यचोष्याभिमानादिताम्बूलं स्रग्विलेपन निर्माल्यभोजनं तुभ्य ददामि श्रीशिवाज्ञया इत्यनेन पुष्पांजलि दत्वा क्षमस्वेति विसर्जयेत् । इति निर्माल्यवासिनी-पूजा ।

निर्माल्यं मस्तके धार्यं सर्वांगेषु विलेपनम् ।
नैवेद्यं चोपभुञ्जीत नत्वा तद् भक्तिशालिने ॥

हृदि रूपं मुखे नाम नैवेद्यमुदरे तथा ।
अगे चदनलपादि यस्य स्यान्मुक्त एव सः ।

COLOPHON इति नित्यपूजाविधिः ॥ श्रीत्रिपुरायै नमः ॥

## 5934. बालार्चनपद्धतिः

OPENING श्रीगणेशाय नमः ॥ श्रीगुरुभ्यो नमः ।

नत्वा श्रीत्रिपुरां बाला श्रीगुरुंश्चैव भारतीम् ।
सर्वतंत्रानुसारं च ज्ञात्वा गुरुमुखाम्बुजात् ॥१॥

संहितादक्षिणामूर्तिस्तथा सौभाग्यवारिधिम् ।
निर्मथ्य विधिर्या सम्यक् वच्मि पूजनपद्धतिम् ॥२॥

तत्र श्रीमान् साधकः ब्राह्मे मुहूर्त्ते उत्थाय रात्रिवासं परित्यज्य हस्तौ पादौ प्रक्षाल्याचम्य शुद्धासने उपविश्य प्रातःकृत्यं कुर्यात् । तद्यथा । श्लेष(?)मातृकादिकुलवृक्षेभ्यो नमः, इति नत्वा

श्वेत श्वेतविलेपमाल्यवसनं वामेन रक्तोत्पलं,
बिभृत्याप्रियेतरेण तरसा श्लिष्ट प्रसन्नाननम् ।
हस्ताभ्यामभय वरं च दधतं शंभुस्वरूप पर ।
हाला(घूर्णित)लोचनोत्पलयुगं ध्यायेच्छिरस्थ गुरुम् ॥

CLOSING अति गुह्यात्पूमे तत्वे तेजस्तत्वे उपस्थितं ।
ततो दिशतु शिष्याय मंगलमभिषेकजम् ।
वायुतत्वे गवो नाम कुरुक्षेत्रं तु नाखल ।
तत. कनखलो नाम(-)नश्चाट्टहासकः ॥

महेन्द्रभीमौ गुह्यातिगुह्याष्टकं तूपरिस्थितम् ।
ततो दिशतु शिष्याय मगलं अभिषेकजम् ॥
वस्त्रापदो रुद्रकोटिरविमुक्तो महालयः ।
गोकर्णो भद्रकर्णश्च स्वर्णोश्वः स्थाणुरित्यदः ॥२३॥

पवित्राष्टार्कमाकाशतत्वे यत्परिकीर्तितम् ।
ततो दिशतु शिष्याय मगल अभिषेकजम् ॥२३॥

COLOPHON इति श्रीसभानंदसूनुरत्नगर्भजमयाचद्रविरचिते बालार्चनप्रदीपे अंतर्यजनादिप्रायश्चित्तकथन नाम नवमः प्रकाशः समाप्तोऽयं बालार्चनप्रदीपः । श्रीमत्त्रिपुरसुन्दर्य्यर्पणमस्तु ॥ श्रीरस्तु ।

श्री श्री ॥श्री॥ श्री

## 5982 . यजुर्मञ्जरी

OPENING

श्रीगणेशाय नमः ।।

तत्र तावत् प्रथमं सर्वमंत्राणां शिरःशेखरीभूतस्य प्रणवस्योपासनोच्यते । यत्र ग्राम्यपशूनां शब्दो न श्रूयते तत्र गंगायमुनातटादिपुण्यक्षेत्रेषु वृक्षैकस्थूणं प्राङ्मुखं कुशच्छन्नं कुशध्वजं कुशपरिवेष्टित गृहं कृत्वा कुशचीरः केशवासाः कुशयज्ञोपवीतः कुशहस्तः शाकयावकपयोभैक्षेष्वन्यतमभोजनो विजितेन्द्रियः पंचलक्षप्रणवं जपेत्

CLOSING

ऋतुकामा यथाशक्ति जपहोमं कृत्वा बंधयोनिच्छेत् गर्भस्तिष्ठति । दधि घृतान्नं निवेदयेत् सावकामित्रं हृत्वा बलि निवेदयेत् पंचकृत्वो जपित्वा ऋतौ गच्छेत् गर्भस्तिष्ठति प्रथमेन वाहनं । द्वितीयेन पोषणं । तृतीयेन तर्पणम् । चतुर्थेन चरणं । पंचमेनाति-अमोघ कर्मेत्याहुः ।

COLOPHON

इति श्रीवाघरभूषणमहाराजमहिभुजा कृतिना रचितायां यजुर्मञ्जर्यां पल्लवः समाप्तः ।

## 6054. श्रीतन्त्रप्रयोगः

OPENING

श्रीगणेशाय नमः ।।

अथातः प्रयोगाश्च वक्ष्यामि मृष्टो पर्वतनंदिनि ।
उपचारं ब्रवीम्यद्य न चाक्षयं दुरात्मने ।।१।।

स्तंभने मोहने चैव मारणाकर्षणे तथा ।
वशीकारं तथाश्चर्यं शांतिक पौष्टिक तथा ।।२।।

एतेषां साधनं वक्ष्ये जगतां हितकाम्यया ।
अभक्ताय न दातव्यं न द्रष्टव्यं कदाचन ।।

रवौ उत्थाय शयनात् गत्वा प्रेतगृहांतिकं ।
मूल साधक एवाशु जपेदयुतसंख्यया ।।
होमो जातीफलैः पुष्पैश्च घृतमिश्रतैः ।
शत्रुसैन्यादिदस्यूनां वा वादिनां स्तंभनं भवेत् ।।

CLOSING

पुनः यक्षिणीमंत्रः ॐ ह्रीं ह्रीं क्लीं ग्रों ग्रां अनुरागिनी सिद्ध फट् स्वाहा;
विधी दिन ७ में ढाई लक्ष करना उसकी दासी आवेगी पीठ पीछे आवाज करेगी मंत्र जपना रात्रि को धूप दीप रक्तपुष्पं रक्तचंदन चोखा दीपक फुलेल कामगर जप सवा लक्ष पूरा करना जो उसकी दासी कहे सो करना । पूजन अष्टकमल का करना सिद्धं भवतु न संशयः ।

## 6069 . सूर्यादिपञ्चायतनपद्धतिः

OPENING

दार्वी वा लेख्यगा चेति मूर्तिस्थानानि सप्त वै ।।
मत्स्यपुराणे तु पित्तलस्याप्युक्ता रीतिकाप्रतिमा कार्या गृहे उक्तप्रमाणतः ।।
प्रमाणमप्युक्तं तत्रैव—

अंगुष्ठपर्वादारभ्य वितस्ति यावदेव हि,
गृहेषु प्रतिमा कार्या पूजनार्थं हि सूरिभिः ।। इति ।।

एवं यथालाभयुक्तध्यानयुतां प्रतिमां कृत्वा उक्तकाले स्वचंद्रानुकूले स्थापयेत् । अथ सूर्यध्यानं मन्त्रमहोदधौ —

शोणाम्भोरुहसंस्थितं त्रिनयनं वेदत्रयीविग्रहम्,
दानाम्भोजयुगाभयानि दधतं हस्तौ प्रवालप्रभम् ।
केयूराङ्गदहारकङ्कणधरं कर्णोल्लसत्कुण्डलं,
लोकोत्पत्तिविनाशपालनकरं सूर्यं गुणाब्धि भजे ।। इति,

एवं तत्तद्देवताकं ध्यानं ग्रन्थान्तरतो ज्ञेयं

CLOSING

उक्तमत्र मया किंचिद्युक्तं तन्महात्मभिः,
अतो निरीक्षितव्येयं प्रतिष्ठापनपद्धतिः ।

COLOPHON

इति श्रीभारद्वाजमहादेवसूनुश्रीदिवाकरकृता सूर्यादिपंचायतनपद्धतिसमाप्तिः । शुभमस्तु । सिद्धिरस्तु ।

Post-colophonic

श्री संवत् १८६१ श्रावण शुक्ला प्रतिपदा समाप्तिमगमत् ।

## 6071. स्वच्छन्दपद्धतिः

OPENING

श्रीगणेशाय नमः ।।

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यो ।

गुरुं गणपतिं वाणीं सांम्बं क्षेत्राधिपं परा,
प्रणम्य सविन्मार्गस्थान् वक्षे स्वच्छन्दपद्धतिम् ।
अमृतानन्दयोगीन्द्रबोधाद्विगतकल्मषः ।
ब्रह्मानन्दाख्ययोगीन्द्रश्चचार पृथ्वीमिमाम् ।

CLOSING

श्रीगुरुं प्रणम्य विद्याद्वितीयकूटेन निर्माल्यपुष्पं शिरसि धृत्वा परदेवताभक्तेभ्यो नैवेद्यादिकं दत्त्वा वै सुहृद्भिः सह स्वयमपि भुक्त्वा स्वात्मानं विश्वातीतं भावयन् यथासुखं विहरेत् । शिवं ।

COLOPHON

इति श्रीसच्चिदानन्दनाथविरचितायां स्वच्छन्दपद्धत्यां नवमः स्पन्दः । श्री परदेवतार्पणमस्तु । श्रीरस्तु ।

## 6126. कुमारसम्भवं, बुद्धिबोधिनीसहितम्

OPENING (Ct.)

श्रीगणेशाय नमः ।।

वृन्दारण्यकदम्बमन्दिररतं नीलाम्बुदश्यामलं,
बर्होत्तंसलसद्विशारदशरच्चन्द्राननं नन्दनम् ।
कर्णोत्तंसितनीलनीरजदलं कान्त्या जगन्मोहनं,
श्रीकृष्णं कलवेणुवादनपरं पीताम्बरं तं भजे ।।१।।

OPENING(w.)

श्रीगणेशाय नमः ॥

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधीव गाह्य स्थितः पृथिव्यामिव मानदण्डः ॥१॥

CLOSING

लतागृहद्वारगतोऽथ नंदी, वामप्रकोष्ठार्पितहेमवेत्रः ।
मुखार्पितैकांगुलिसञ्ज्ञयैव मा चापलायेति गुणान्यनैषीत् ॥४१॥

( Incomplete )

## 6148. नैषधमहाकाव्यं जिनराजिटीकान्वितम्

(upto 104th verse of canto IV only)

श्रीजिनराजगुरुभ्यो नमः ।

OPENING

प्रोत्सर्पत्कलिकालपंककलिकानाशिलष्टमाहात्म्यभाक्,
कल्पद्रुः किल कल्पितार्थकरणे सेव्यः सतां सेव्यते ।
जाड्याम्भोनिधितारणैकतरणिः प्रारिप्सितेषु विधौ ।
विघ्नव्यूहतमोवितानतरणिः श्रीपार्श्वनाथः प्रभुः ॥

\+ \+ \+

गुरुचरणाराधनया संप्राप्तानेकवाग्विलासेन ।
नैषधवृत्तिः सुगमा क्रियते जिनराजमुनिराजः(जेन) ॥

CLOSING

देवि (वि)दर्भजे एष पुरोवर्त्ती अमृतदीधितिः पीयूषकिरणः चन्द्रः न तु चंडांशुरतोऽमुष्य चद्रस्यांशुभिः किं तापं भजसि ? किमिति तदाह, आश्रयसे इति अपर-सखी वचः । बाले नोत्तरमाह-हे सखि, शशभृतकलंकसबन्धिन्यः चन्द्रिकाकौमुद्यः यदि मृता विनिष्टा भवति अमावास्या ।

अमृतेति ।

( Incomplete )

## 6169. मकुन्दविलासः

श्री गणेशाय नमः ।

OPENING

अस्ति प्रशस्ता मधुरेति काचिदावासभूरादिमपुरुषस्य कांतारतिस्वेदकणापहा-रिकालिन्दकन्यासलिल(ल)हरीसमीरा । साले (?)नरुद्धेष्वपि वारिदेषु संपद्यते यत्र पयोदपंक्तिः । अर्कावमतेजोऽगदधूमचन्द्रकांतोपलाम्भः करिकर्णतिपातैः । कुचेषु कुंभाकृति-कुम्भजातमदेषु यस्यां मदिरेक्षणानाम् । प्राकाररेखा परिखापदेशाद्विन्ध्या बुधा नर्म विनिर्मिमाते ।

CLOSING

पूतं स्वतः पूततरं ततो यत्, गाङ्गं पयः शङ्करमौलिसंगात् ।
तत्पातु मातुः प्रणयापराधः, पादाहतैः पूततनुं ततो नः ॥

## 6191. रघुवंशमहाकाव्यम्

OPENING

आकारसदृशः प्रज्ञः प्रज्ञया सदृशागमः ।
आगमैः सदृशारंभः आरंभसदृशोदयः ॥

पुनः कथंभूतो दिलीपः, आकारः शारीरप्रकृतिराकारः रूपाकृत्यादिलक्षणा। आकारसदृशी, सदृशं वत् प्रज्ञा बुद्धिर्यस्य स आकारसदृशः प्रज्ञः। यादृशो रूपः यादृशी आकृतिर्वर्त्तते तादृशी प्रज्ञाप्यस्तीत्यर्थः ।

CLOSING

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौ,
सुरसरिदिविवतेजो वह्नि................
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः ।

COLOPHON

इति श्री वा० श्री कमललाभगणिशिष्य वा० श्री चरणधर्मगणिविरचितायां रघुकाव्यटीकायां वरप्रदानो द्वितीय सर्गः ।

## 6196. रघुवंशटीका संजीविनी

OPENING

श्री गणेशाय नमः ॥ अविघ्नमस्तु ॥ श्री विघ्नविनाशाय नमः ॥

मातापितृभ्यां जगतो नमो वामार्द्धजातये ।
सद्यो दक्षिणदृक् पातु सकृच्चद्वामदृष्टये ॥
अंतःशयतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवं ।
त नरं वपुषि कुंजरं मुखे मन्महे किमपि तुंदिलं महः ॥
भारती कालिदासस्य दुर्व्याख्या विषमूर्च्छिता ।
एषा संजीविनी टीका तां यथोज्जीवयिष्यति ॥

CLOSING

तमिति । प्रसवो गर्भः । मोचनं फलं च विवक्षितं स्यादुत्पात्तौ फले पुष्पे प्रसवो गर्भ-मोचन इत्यमरः । तस्य यः समयः तदा कांक्षिणीनां प्रजानां भावाय भूतये । भावो लीला क्रिया चेष्टाभूत्यभिशयजंतुषु, इति यादवः ॥ क्षितिरतगूंढ नवो बीजमुष्टिमिव श्रावणमास्युप्तो बीजमुष्टिरिति भावः । मुष्टिशब्दो द्विलिङ्गः । अवलीनो मुष्टि-मुस्तकाविति यादवः । अतगूंढ अंतर्गतं गर्भं दधाना हेमसिंहासनस्था अव्याहताज्ञा राज्ञी मौलैः मूले भावैः मूलादागतैर्वा आप्तैरित्यर्थः । स्थविर सचिवैर्वृद्धामात्यैः सार्द्धं भर्तुः राज्यं विधिवद्विष्यर्हं यथाशास्त्रमित्यर्थः । अर्हार्थे वति प्रत्ययः, अशिषत् शास्ति स्म । सर्तिशास्त्यर्तिभ्यश्चेति च्लेरङादेशः । शासइदङहलोरिताकारः ॥५७। श्री ।

COLOPHON

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशटीकायां संजीविनी-समाख्यायां एकोनविंशतितमः सर्गः समाप्तः । श्रीः ।

यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ।

Post-colophonic

संवत् १८१२ पौष सुदी ८ शुक्रवार लिखतं । श्री । श्री कल्याणमस्तु ।

## 6209. रघुवंशकाव्यं, सुगमार्थप्रबोधिनीटीकोपेतम्

OPENING (on f. 2)

.........प्रभवति उत्पद्यते अस्मादिति प्रभव: ऊकारान्तादप् यद्यपि भूधातुरने-कार्थोऽस्ति तथा हि

सत्तायां मंगलवृद्धौ निवासे व्याप्तिसंपदो,
अभिप्रायेऽप्ते च शक्तौ च प्रादुर्भावगतौ च भू: ।।१।।

CLOSING

तमपहायक ..लोद्भव पुरुषमात्मभुवं च पतिव्रता ।
नृपतिमन्यमसेवत देवता सकमला कमलाघमर्थिषु ।।२१।।

व्याख्या—सकमला, कम ''लक्ष्मी देवता अन्य कं नृपति भूपमसेवत । न किम-पीत्यर्थ: । किं कृत्वा, त दशरथं च पुनः आत्मभुव पुरुष कृष्ण अपहाय त्यक्त्वा किंभूता कमला पतिव्रता सती । कथंभूत त दशरथ ककुत्स्थकुलोद्भव, पुनः कथभूतं तं दशरथं अर्थिषु याचकेषु अलाघ: ।

( Incomplete )

## 6217. राघवपाण्डवीयं सटीकम्

OPENING

श्रीराघवमाधवाभ्यां नम: ।।

वैकुंठ किम्विदेष द्विजपतिककुदो नाकपर्द्दी कपर्द्दी,
प्रालोला हीनमाना कलिततनुधन मूर्तिमा्न्कि पिनाकी ।
किं चापीताम्बरो न प्रमथपरिवृढ: श्यामकठोऽपि भावतै-
रित्थं पायादपायाद्विदितविभवो माधवोमाधवो न: ।।१।।

हेरंबमबाकरकुड्मलाग्रसतानताया कृत...
दोष षाण्मातुराकृपृकराग्रचचद्विशालसमोदककन्दुकस्य: ।।२।।

CLOSING

पद्यं— श्रियायुक्तस्स भारत्या सानुज: साधुवत्सल: ।
पृथिवीम्पालयामास कामदेव इवापर: ।।६४।।

टीका– श्रियेति, भारत्या भरतसबंधिन्या तस्य यौवराज्यस्य दत्तत्वादित्यर्थ: । श्रिया राजलक्ष्म्या जुष्टस्सेवित: । भारत्या वाण्या वा जुष्ट: सभारत्या भारतीसहितया श्रिया वा जुष्ट: । सानुजो लक्ष्मण-भरत-शत्रुघ्नयुत· साधुषु वत्सल: स राम: पृथिवी-म्पालयामास । अपरोऽय: कामदेव: कंदर्प: स इवेति सौन्दर्यकथनपालनविषये काम-देव एतत्काव्यकारयिता नृपस्तद्वदिव, पक्षे-भारत्या भरतस्य राजविशेषस्य कुल-संबंधिन्या श्रिया जुष्ट: सानुजो भीमादिसहितस्स युधिष्ठरोऽन्यत्तुल्यं–६४

COLOPHON

इति श्रीहरचरणोप्रसूतकार्दंबकुलतिलकचक्रवर्त्तिवीरश्रीकामदेवप्रजयोक्ताहितश्री-कविराजपंडितविरचिते श्रीराघवपाण्डवीये महाकाव्ये समस्तप्रक्रियाविराजमानरिपु-कुलनाशननारायणपरायणमहाराजाधिराजश्रीमदमरसिंहकारिते श्रीशशिधरकृते चैतद्व्या-ख्याने रावण-दुर्योधनवधानंतर-रामयुधिष्ठिरयोरभिषेचनं नाम त्रयोदशस्सर्गस्समाप्त: ।।१३।।

## 6218. रामचरितमहाकाव्यं (पूर्वार्धम्)

OPENING

ॐ नमः श्री शारदायै । ॐ नमः श्री गणेशाय । नमः श्री गुरुभ्यः ।

अथ माल्यवतः.........काकुत्स्थवियोगिनः ।
दुर्निवाराश्रुसंयोगाज्जगाम जलदागमः ।।१।।
शशाम वृष्टिभिर्न्वाना मुक्तसंगितस्य भूभृतः ।
विरराम न रामस्य धारासततिरश्रुणः ।।२।।

## 6218. रामचरितमहाकाव्यम् (उत्तरार्धम्) अभिनन्दकविकृतम्

OPENING
(Canto XV, v. 54)

माकमलभवेन योगेनापतिरस्कृतम् बत तरसा न योगतः ।
त्वया परोपकृतिसुखाबलं विनार्जितम् जितमसुमा चमूबलं विना ।।५४।।
नवप्रश्नः कृतः पृष्टः ईश्वरं जना सुरांगनासदृशविकृतिरजना ।
त्वमेषितः खलु सुधया सुधामनैः स्मरात्मनः प्रवरसि किं सुधासनैः ।।५।।

CLOSING

विभीषणमभाषत प्रवगराट् जितो रावणस्तमो-
मिति जगाद सहलय इवावशेषे क्षणात् ।
खरात्मजविकत्थनात् वितथमेव हर्षोच्चयो
निकुम्भनिधनेऽपि यद् दशमुखस्य मूखता ।।८५।।

COLOPHON

इत्यभिनन्दकृतौ श्रीरामचरिते महाकाव्ये निकुम्भकुम्भबधो नाम षट्त्रिंशः सर्गः समाप्तः ।।छ।। शुभं भवतु ।। कल्याणमस्तु ।।छ।।

Post-colophonic

पालान्वयांबुवनैकविरोचनाय, तस्मै नमोस्तु युवराजनरेश्वराय ।
कोटिप्रदानकुटिलोज्ज्वलकीर्त्तिमूर्त्ति-र्येनापरत्र पदवीगमितोऽभिनन्दः ।।
किं सीधुभिर्भवतु फाणितशर्करार्द्यः, किं वा सितासहवरैः क्वथितैश्च दुग्धैः ।
धुष्प्राञ्चिधलब्धसुधियापि न किञ्चिदेवं, यत्राभिनन्दसुकवेर्विचरति वाचः ।।
रामो नाम बभूव बहुबल. सीतेति हु, ताम्पितुर्वाचा पचवटीवने विचरतस्तस्याहर- द्रावणः
अन्येऽपि नूनमनघा कतिनो कवीन्द्राः स्वैर्वागविलासविभवैरनुरञ्जयन्तः ।
किं त्वद्भुताऽमृतवचोनिचयः पृथिव्या, सख्यावती प्रथमगण्य इहाऽभिनन्दः ।।

## 6222. रावणार्जुनीयं महाकाव्यम्

OPENING

ॐ श्री गणेशाय नमः ।। ॐ नमः त्रिपुरसुन्दर्यै ।।

श्रीमानभूद्भूपतिरर्जुनाख्यः, कृती कृतज्ञः कृतवीरसूनुः ।
आलोक्य यं सिंहमिवाजिभाजं, ननाश शत्रुर्गजनाशमाशु ।।१।।
यस्यार्य्यघोष्ठाध्ययनेन तुल्यं, लोकोऽयमुच्चैश्चरितं पुनानम् ।
युद्धेषु पीनायतबाहुदर्पं, शत्रुव्रजः संकुटितुं प्रनष्टः ।।२।।

CLOSING

जिघांसुभिर्लोकमुपासितं.......बुभुत्सुभिर्देवगणैर्विवर्जितं ।
दशाननस्यान्तिकमारुरुक्षतस्तदाइढोके गगनेन पुष्पकम् ।।
...पि फलिषुरिव पादपः............दशास्य जिजनिषुरस्य ..
परेषां यस्य विभुतं शङ्कु...............।।

COLOPHON

इत्यर्जुनरावणीये महाकाव्ये सप्तविंशः सर्गः समाप्तः। समाप्तं चेदमर्जुनरावणीयं महाकाव्यम् ।।

## 6223. विजयदेवमाहात्म्यम्

OPENING

ऐं नम. ।। स्वस्तीव स्वस्ति-संपृक्त स्वस्तीव स्वस्तिकारकम् ।
वर्द्धमानं जिनं नौमि जगतः परमं प्रियम् ।।१।।

व्याख्या—ग्रहं वर्द्धमानं जिनं नौमीति क्रियान्वयः सुगमः कथं वर्द्धमानं ? स्वस्तिसंपृक्तं स्वस्ति कल्याणतः संपृक्तो मिलितो यः स तथा तं किमिव स्वस्तीव स्वस्ति-शब्द इव, कथंभूतं स्वस्ति, स्वस्तिसंपृक्त कल्याणमित्यर्थेन मिलित व्याप्तं यत्तत्था तेन स्वस्तीत्यस्यार्थस्य कल्याणादपरपर्य्यायस्य स्वस्ति-शब्द एव विद्यमानत्वान्नु घटादिशब्दवद् दे घटादिशब्दानां अपरपदार्थवाचकत्वान्न च कल्याणादेशः ।

CLOSING

ग्रा चद्रसूर्यं त यदाकर्णे(-)हृतो परेणापि परिच्छदेन ।
जीयाच्चिरं स्तान्मम सौख्यलक्ष्म्यै श्रीवल्लभः पाठक इत्यपाठीत् ।।

COLOPHON

इति खरतरगच्छीयश्रीज्ञानविमलोपाध्यायशिष्यश्रीश्रीवल्लभपाठककविरचिते श्रीविजयदेवमाहात्म्यनाम्नि काव्ये श्रीविजयदेवसूरि सर्व बलबो(?)हीरदेवसान्निध्यादिवर्णनो नामैकोनविंशः सर्गः समाप्तम् ।

## 6224. शङ्करदिग्वजयं डिण्डिमटीकोपेतम्

श्रीगणेशाय नमः ।।

OPENING

श्रीमद् विष्णुमजाभिवद्यचरण गोपादिकाराधितं,
वदे पूर्णविकासिसौम्यवदनं संसारतापापहम् ।
सत्यं ज्ञानमनंतविधुर(-)गोभारसहारकम्,
सर्वात्मानम ग्रास्त सर्वममलं विश्वेश्वरं शङ्करम् ।।

श्रीगणेशाय नमः ।

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ।
प्राचीनशंकरजये सारः संगृह्यते स्फुटम् ।।१।।

व्याख्या- (टीका) प्रणम्येति–परमात्मानं परमेश्वरं प्रणम्य प्राचीनशंकरजये सारः मया माधवेन संगृह्यते, संग्रहत्वेनास्फुटत्वमाशंक्याह—

CLOSING

इन्द्रोपेन्द्रप्रधानैस्त्रिदशपरिवृतैः स्तूयमानः प्रसूनैः,
दिव्यैरभ्यर्च्यमानः सरसिरुहभुवादत्तहस्तावलम्बः ।

प्राङ्ग्योक्षाणमग्र प्रकटितसुजटाजूटचन्द्रावतंसः,
शृण्वन्नालोकशब्द स मुदित ऋषिभिर्व्यासितैज प्रतस्थे ।।१०७।।

COLOPHON

इति श्रीमाधवीये तच्छारदापीठवासगः संक्षेपशंकरजये सर्गः पूर्णोऽपि षोडशः। श्री० शिवार्पणमस्तु ।

## 6240 श्रीनिवासविलासः

श्री गणेशाय नमः ।। श्रीशं वंदे ।

वंशस्ते मुरली तदस्तु भण भो गोत्र फणीन्द्राचलो
माताहं जगतां त्रयस्य सविता वामेतरादृश्यम(?) ।
श्वास्ते ते शरण त्वमेव सुमुखीत्येव हि पद्मावती
वाचा समदयञ्जयत्यनुकल श्री श्री निवासो हरिः ।।१।।

भवसिंधुपारगमने कवितामार्गप्रकाशनेऽपि मम ।
मानवमृगराजगुरोः सेवोडुपतरणिसरणिमावहतु ।।२।।

CLOSING

तदेति भीष्मः देवव्रतः विचित्रवीर्यः राजभेदः इति नामतो विशेषः क्रूरः ।।१३।। अद्भुतपराक्रमः शुभ्राश्वयुगिति ।। शुभ्राः उद्दीप्ताः इति त्तोंडिमानपक्षे ।। पार्थाः धवलाः ।। शुभ्रमुद्दीप्तशुक्लयोरित्य० ।। हरिः सिंहः कपीश्वरः, रणक्ष्मां रणभूमिं । अन्यत् सुगमं ।।१५। व्यतिकरः प्रकारः ।। वीरावेताविति ।। विग्रह समरांगणयोरिति-धरणिः, अग्रे सन्मुखंतिप्र वीराभावात् ।१६।१७।। न केवलमिति । वशाधरः गजः । नीरदो मेघदंतहीनश्च । सेनापतिरिति । चम्वा इद्धः ।।५।। चेतिभिन्न पदो । मूढः ।।१६।। प्राकाशीतिधाराः ।। प्राणि । अनेघेति अरमिति छेदः अलमित्यर्थः । कः विपक्षाणां पात, २०।२१। निर्जेति रागः । भैरवादिः । सप्तस्वरसमाहारो मूर्च्छना परिकीर्तितेति युक्ततप्रकारः । तत्त्वार्थस्तु स्फुटः ।२२। वाहिनीति । तरंगिणी सेना च ।।२३।। दाय, पित्रार्जितं द्रव्य ।। कठे कठोरवो नृसिंहः ।।२४।। तत्त्वार्थस्तु स्फुटः ।

COLOPHON

इति श्रीमदुदारश्रीनिवासविलासे पंचमो विलासटीका पर्याप्ता ।

शुभं भवतु । श्रीरस्तु।

श्री गोविन्दः श्रीश वंदे ।। जय श्री वेङ्कटेशः श्रीमाधव श्री पद्मावतीरमणाय नमः

शुभ भवतु । श्रीरस्तु ।

शकाब्द १७५९ अषाढ शु० ३ बुधवार

## 6243. सेतुबन्ध-महाकाव्यं, रामसेतुप्रदीपटीकासहितम्

OPENING

श्रीगणेशाय नमः ।।

अथ सटीकसेतुबन्धकाव्यप्रारम्भः ।

असितमहसि सेतौ पट्टिकाया मुदन्वत्तटयुगघनमुक्तावर्णपङ्क्तिद्वयेन ।
अलिखदिव कठिम्ना यत्प्रशस्ति समुद्रः स जयति रघुवंशग्रामणी रामचन्द्रः ।।१।।

गङ्गाम्बुस्तिमिताङ्घ्रिमौलिदिनकृत्कन्याम्बुकम्बुप्रभं ।
तत्वां पातु समुद्रजागिरिजयोरानन्दबीज महः ।
नाभीपंकजनालमूलमिलनात्सव्यासकूलस्थितो
यत्र स्थूलमृणालवल्लितुलनामालम्बते भोगिराट् ॥२॥

अर्द्धं तदन्तकल्पितकरेणु मम वामभागमिभवदनं ।
पितुरर्धनागरीक वपुरनुकुर्वन्तमिव कलये ॥३॥

CLOSING

सीतासंप्राप्तिदशया रामदासप्रकाशिता ।
रामसेतुप्रदीपस्य पूर्णा पञ्चदशी शिखा ॥१५॥

सेतुप्रथसमुद्रादर्था मणयो मयाऽऽकृष्टाः ।
उपदेशसहकृतेन्द्रियपटुभिः प्राज्ञैः परीक्षतां ॥
चक्षुभूततु सीतांशु (१६५२) रभिगणिते साहसांकस्य वर्षे,
वर्षे जल्लालदीन्द्रक्षितिमुकुटमणेर्व्यनतागमाम्याम् ।

पंचम्यां शुक्लपक्षे नभसि गुरुदिने रामदासेन राज्ञा ।
विसे(ज्ञे)नापूरितोय तिथितुलितशिखो रामसेतुप्रदीपः ॥४०॥
सूर्याचन्द्रमसोरुदवति कथा यावत्तथा दीप्यते,
यावत्कौस्तुभकान्तिजालजटिला वैकुंठवक्षःस्थली ।
गंगावीचिभिरंचितो हरजटाजूटः समुज्जृ भते,
यावत्तावदयञ्जवरेण जगता राजन्वती वर्त्तताम् ॥

COLOPHON

इति श्री श्रीमन्निखिलमहीमहेन्द्रमुकुटमणिमयूखमंजरीपिजरीकृतचरणकमलसकल-सार्वभौमशिरोमणि-श्रीमदकबरजल्लालदीन्द्रकृपाकटाक्षवीक्षितभानुभक्तिपरायणहृदय-हर्म्यनिवासितनारायणमहाराजाधिराजश्री श्रीरामदासविरचितो रामसेतुप्रदीपो नाम ग्रंथः परिपूर्णः ।

वि० सं० १६४४ ।

## 6245. हरचरितचिन्तामणिः

OPENING

ॐ विघ्नहर्त्रे नमः ॥ ॐ श्रीमृत्युंजिते नमः ।

ॐ नानाप्रकाररससारप्रकाशनविशारदः ।
क्रीडन्विचित्राकारंजयत्येको महेश्वरः ॥
एकाप्यनेकरूपैव वाच्यवाचकभंगिभिः ।
सर्वज्ञस्य परा शक्तिः भासतो प्रतिभासताम् ॥

CLOSING

अभ्यर्णे मधु चेत्पश्येत्किमर्थं पर्वत व्रजेत् ।
एवमेकैकमविकां विमुक्ति पुरतः स्थिताम् ॥
विहाय नैनमविकां(-)कः प्राज्ञः प्रतिपद्यते ।

इति किमपि कृपापरस्य शंभोश्चिरमुपदेशवचासि चर्चयित्वा ।
परिहरति न दर्शनान्तर यौवतवज्जन्म निरर्थमेव तस्य ॥

COLOPHON इति श्रीमहामाहेश्वरजयद्रथविरचिते हरचरितचिन्तामणौ शिवधर्माभ्युद्धारो नाम त्रिंशत्तम: प्रकाश: ।

## 6246. हरविजयमहाकाव्यम् (सटीकम्)

OPENING ॐ नम: श्रीकण्ठाय ।

कण्ठश्रियं कुवलयस्तबकाभिरामदशानुकारिविकटच्छविकालकूटम् ।
बिभ्रत्सुखानि दिशतादुपहारपीतधूपोत्थधूममलिनामिव धूर्जटिर्व: ॥१॥
जृम्भाविकासितमुख नखदर्पणान्तराविष्कृतप्रतिमुखं गुरुरोषगर्भम् ।
रूप पुनातु जनितारिचमूविमर्ष महत्तदैत्यबधनिर्व(ह)णो हरेर्व: ॥२॥

OPENING (ct.) टीका— ॐ स्वति कुवलयस्तबकमुत्पलगुच्छं दामस्रग्दाम विकटं सुन्दरे प्रोक्तं विशालविकरालयोरिति विश्व: । अथ च शङ्करो नि:श्रेयसलक्षणशुभकारी सुखानि सुशोभनानि स्वकार्यक्षमाणि अविषयापवर्तीनि खानि इन्द्रियाणि दिशतात्सम्पादयतु, कथंभूत: अनुका: शृ गारिणास्तेषामरि: काम: तथा विकटछविभीषणकान्तिर्य: काल: तयो: कूटा दाहिका उपहार हारसमीपेऽर्थाद्धारोरगसमीपे य: पीत: कपिशो धूपो विषाग्नि-सबंधी सन्तापस्तदुत्थेन धूमेन मलिनामिव कण्ठश्रिय बिभ्रत्, पुन: कोदृश: कुवलये भूमण्डले स्तबकाना स्तोतॄणामभिरामस्याभीष्टस्य दामा दाता, स्तौतीति स्तवोऽजन्त: पचादित्वात् स एव स्तबक: स्वार्थे क-प्रत्यय:, व: युष्मभ्यम् ।१॥ जनितोऽरिचमूनां विमर्शो विविधप्रकारविचारो नरसिंहोभयरूपत्वेन आकाराद्यनिर्धारणाद्येन तत्तं सच्च-रित्रमुत्क्रम्य वर्त्तमानो यो दैत्यो हिरण्यकशिपुस्तस्य बधनिर्वाहकम ॥२॥

CLOSING समाप्तं हरविजयं अत्रामी वृत्तान्ता: गणपतोपन्यास: षोडश: सर्ग: ॥१६॥

पुष्पावचय: ॥१७॥ जलक्रीडावर्णनम् ॥१८॥ दिगतवर्णन ॥१९॥ चन्द्रोदय: ॥२०॥

\+ \+ \+

सुभटसंदीपनं ॥४५॥ च डकाममराक्षेप: (?) ॥४६॥ शक्तिप्रदानवर्णनम् ॥४७॥ चित्रयुद्धवर्णनम् ॥४८॥

सुरासुरविमर्द: ॥४९॥ देव देव प्रतिष्ठापनम् ॥५०॥

\+ \+ \+

हरविजयमहाकवे: प्रतिज्ञां शृणु तत्कृतप्रणयो मम प्रबन्धे ।
अपि शिशुरकवि: कवि: प्रभावाद्भवति कविस्तु महाकवि: क्रमेण ॥

COLOPHON शुभ संवत् १२३० पौ० सु० ति० प्रतिपदा शनिवासरे समाप्तम् ।

## 6250. अभिलाषशतकम्

**OPENING**

श्री गणेशाय नमः ।

पाञ्चालीकरिराजवनिता श्रीदामकुन्तीसुताः ।
सर्वेप्रत्युपकारतो व्यवहृताः ज्ञातं त्वदुक्त्येव तत् ।।
नोपेक्ष्यो व्रजवत्सलतात्मविमुखभ्रांत्या त्वयाऽहं क्वचि-
दस्मान्नाथ परोपकारकृतिषु ख्याति कथ यास्यसि ।।१।।
प्रातर्नीरदनीलमुग्धमहसः त्वापं स्मरामि स्फुटं
त्वत्पादबोधितनेत्रनीलमसृजल्लीलाग्रवक्त्राम्बुजम् ।
येनेनोदयतः पुराऽरुणकृतो बोधप्रभावांतरी
नीलालिद्वयवासिताभिनलिनस्याहो सपत्नीकृतम् ।।२।

**CLOSING**

हुत्वा कूर्चकमेकतः सपदि सा प्रक्षाल्य पाणि पुन-
स्तांबूल प्रददाति सत्वरतया तस्मै सदैकाकिनी ।
नासीना नहि नेत्रमीलनवती मुक्तिर्वराका निशि
तस्मात्ते मुरली मनोहर हरे कार्या सहायाऽर्थिनी ।।६१।।
औदास्यं न विधेयमत्र नृहरे यद्यन्मया प्रार्थितं ।
तत्र द्वि द्वि तवानुकूलमखिलं तन्नास्ति यन्मादृशम् ।।
किं याच्यं समुपस्थिते वद चिदानन्दैककन्दे त्वयि
गङ्गातीरतृषातुरः शृणु कदा कूपोदके रज्यति ।।१००।।
शिवशौरिपदाब्जपूजनप्रतिभाभावितत्पदाम्बुजः ।
अभिलाषशतं मनोहरं कुरुते केवलरामनामकः ।।१०१।।

**COLOPHON**

इति श्री ज्योतिषराय-केवलरामविरचितं अभिलाषशतक समाप्तम् ।

**Post-colophonic**

काव्यामृतरसास्वादजातरोमाञ्चकञ्चुकाः ।
विनाऽपि कामिनीसंगात्कवयः सुखमेधते ।

## 6257. आर्याशतकं, स्वर्णमालाटीकान्वितम्

**OPENING**

श्रीगुरुश्रीपादुकाभ्यो नमः । श्रीकामाक्ष्याम्बा श्रीपादुकाभ्यो नमः ।।
श्री एकाम्रनाथ श्री पादुकाभ्यो नमः ।। श्री कम्पानदी श्रीपादुकाभ्यो नमः ।।
श्री काञ्चीपुरी श्री पादुकाभ्यो नमः । श्री मूककविसार्वभौम-श्रीपादुकाभ्यो नमः ।
श्री मूककविसार्वभौमसुधासहचरीवाणी श्रीपादुकाभ्यो नमः ।।

कारणपरचिद्रूपा काञ्चीपुरसीम्नि कामपीठगता,
काचन विहरति करुणा काश्मीरस्तबककोमलाङ्गलता ।।१।।

अन्वय—कांचीपुरसीम्नि कामपीठगता कारणपरचिद्रूपा काश्मीरस्तबक-
कोमलाङ्गलता काचन करुणा विहरतीत्यन्वयः ।।

टीका—कारणं सर्वजगद्धेतुभूतं पर परशिवाख्यं चित् चैतन्यं तदेवरूपं यस्याः सा तथाविधा यद्वा, कारणात् षट्त्रिंशत्तत्त्वतः प्रकृतितो वापरा कारणपरा सा चासौ चिद्रूपा च कारणपरचिद्रूपा इति......

CLOSING

आर्याशतकं भक्त्या पठतामार्याकटाक्षेण ।
निस्सरति वदनकमलाद् वाणी पीयूषधोरणी दिव्या ।।१००।।

टीका—भक्त्याऽऽर्याछंदसा शतक आर्यायाः श्रीशिवाया वा स्तुतेः श्लोकशतकं पठता पुरुषाणामार्यायाः श्रीकामाक्ष्याः कृपाकटाक्षेण वदनमेव कमलं तस्मात्पीयूष-धोरणी अमृतानुकारिणी दिव्या देवी संस्कृतरूपा श्रीमती स्वरूपप्रकाशिनी वा वाणी सरस्वती निस्सरति, इत्यर्थः ।।

COLOPHON

इति श्रीमूककविसार्वभौमविरचितं आर्याशतक समाप्तम् ।

Post-Colophonic

इति श्रीराजराजेश्वरमहाराजाधिराजमहाराजमरुदेशाधीश-राठोडवंशावतंसयोध-पुरनाथमहाराजश्रीश्रीमानसिंहात्मजचतुर्ग्रामाधीश-शिवराष्ट्रपुरपति- श्री आनन्दानन्द-नाथानन्दाम्बाचरणाराधकहरिहरब्रह्मेन्द्रचन्द्राभिवंदनीयश्रीमत्त्रिपुरसुन्दरीचरणचञ्चरीक-रावराजेन श्रीशोभनसिंहेन विरचिता श्रीमूककविसार्वभौमकृतशतकपंचकमध्यस्थस्तुती-यार्याशतकस्य सुवर्णमालाख्या टीका सम्पूर्णा ।।

## 6262. ईश्वरशतकं सटीकम्

OPENING

ॐ श्रीस्वात्मने गुरवे शिवायो नमः ।

ॐ स वः पायाद्येन निन्ये वासुकिर्निजहारताम् ।
तपोपाघात्तनु कोपाद्यः स्मरस्य जहार ताम् ।।१।।

टीका—स वः पायादित्यादि ग्रंथारंभे त्रिविधविघ्नोपशान्त्यर्थं कविना नमस्कार-वाक्य वदुचित सूचित येन भगवता स्वतन्त्रेण धराधरणयोग्यो वासुकिर्निजहारतां नीतः । एतेन विश्वाधारत्वं ध्वनित, तथा तपोपात्सयमविघ्नविघातयित्वान्नतु ईर्ष्यया कोपात्त शिवस्य प्रसिद्धा स्मरस्य तनु जहार ददाहेति प्रतीयते तामित्यनुभवगोचराम् अत एव यच्छब्दोपादान न कृत यदाहुः प्रकारान्तरप्रसिद्धानुभूतविषयस्तच्छब्दो यच्छब्दो-पादान नापेक्षते तज(?)नमस्कारः स्वातन्त्र्यकर्तृत्वात् भगवतः सर्वातिशायित्वादर्था-देवाक्षिप्तः ।।१।।

श्लोकः—

रक्षावतारं गंभीर भवमुग्रहरेश्वर ।
नमनीति गुण त तु ममताप्रियतामिमाम् । २।।

टीका—रक्षेति, हे ईश्वर परमात्मन् तद् उक्तं क्लेशकर्म विपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः तत्सम्बोधन, भव संसार गम्भीरं तद् हर निवारय, कथभूतं भव-मुग्रं कठिन त्व भक्तानामवतार अवतरण भवात् पुनः पुनरागमन रक्ष, कविना च अव-तारमवतारनामान मां पाहीति स्वनाम ध्वनित, तु पक्षान्तरे इमां प्रत्यक्षां सर्वेषा ममताप्रियतां अहकृतिहेवाकिता प्रसिद्धं लोकोत्तर नीतिगुण नय प्रापय, अत्र च रक्ष

प्रवतारं गम्भीरं भवं उग्रं हर ईश्वर नयनीतिगुणं त तु प्रसत् प्रप्रिय इति हर्योर्द्वयोः शब्दयोरर्थस्य पौनरुक्त्यमिवावभासते मिश्रार्थत्वात् पुनरुक्तवदावभासः, प्रामुखाव-भासनं तु पुनरुक्तवदाभासमिति ॥२॥

CLOSING

भो भो भविभुभावोभविभावैभवभोभुवः ।
भवाय भव वा भाविभवाभिभवभावभित् ॥११६॥

टीका—भो, भो, भव महेश्वर भाना नक्षत्राणा विभुः चन्द्रः जटेन्दुरित्यर्थः तस्य आभो दीप्तयः ताभिर्विगता इभस्य गजासुरस्य विभा वैभवं यस्मात्तादृशत्वमव रक्ष भवा-भिभवाभिरित्यर्थः, अर्थः प्रकरणलिङ्गमित्यलकारज्ञः भावीयः भवाभिभवः संसारखली-कारस्तस्य यो भावः सत्ता तद्भित् भव, वा शब्दो विकल्पे, भो इति प्रधानामत्रणे आचक्षतः कृतान्ताद् भियो भयस्य भूरुत्पत्तिस्थानं ततः द्व्यक्षरोऽय श्लोकः ॥११६॥

COLOPHON

इति श्री महाकाव्य'वतारकृतमीश्वरशतकं सटीक समाप्तम् । तत्सत् ।

## 6264. उपदेशशतकम्

OPENING

श्री गणेशाय नमः ॥

त्रिषु देवेषु महान्त भृगुर्बुभुत्सुः परीक्ष्य हरिमेकम्
मेनेऽधिक महिम्ना सेव्यः सर्वोत्तमो विष्णुः ॥१॥

रुक्माङ्गदः स्वपुत्रं निहत्य खड्गेन मोहिनीवचसाम् ।
सत्या ररक्ष वाच न सकटेऽपि त्यजेद्धर्मः ॥२॥

CLOSING

स्फुटमार्याशतगदितान्पृथक् प्रमाणीकृतानुदाहरणैः ।
शतमेतानुपदेशान्विभावयन्भावयत्सिद्धिम् ॥१०१॥

कुतुकाय कोविदाना मूढमतीना महोपकाराय ।
निरमात्कविर्गुमानी शतोपदेशप्रबंधमिमम् ॥१०२॥

## 6266. ऋतुसंहारकाव्यं सटीकम

OPENING

श्रीपरमामने नमः ॥

प्रणिपत्य जिनाधीश श्रीशान्ति यद्गुणस्तुतौ ।
सहस्राक्षोऽपि साहस्रजिह्वामास्ये समीहत ॥१॥

ततः प्रणम्य परमात्मान दद(देव)त्रिजगत्पति ।
श्रीवीर स्वर्णवर्णाभ महामोहविनाशकम् ॥२॥

गुरूणां चरणद्वन्द्वं नत्वा स्तुत्वा च भारती ।
ऋतुवर्णनकाव्येऽस्मिन् वृत्ति सूत्रं तनोम्यहं ॥३॥

टीका—त्रिभिर्विशेषकम् तत्रादावस्योत्पत्तिमाह, पूर्वं मूर्खत्वपरिपीडितः श्री-कालिदासनामा कविः कालिकानाम्नी देवी समाराधितवान् सा च प्रत्यक्षीभूय

उवाच—तुष्टोहं वत्स, वर वृणीष्व, तेनोक्तं, विद्यां प्रयच्छ, पश्चाद् भगवत्याऽमृतपानं कारित, प्राज्ञ: सरस्वतीलब्धवर: सन् पण्डितराजः स्वश्वशुरश्रीभोजराजस्य प्रतोलीद्वारमागतस्तदा पण्डितैः प्रश्नः कृतः, अस्ति कश्चिद्वाग्विशेषः, तदा तेषां वचनं हृदि न्यस्य स्वपाण्डित्यज्ञापनार्थमादावस्ति १ कश्चि २ द्वाग् ३ विशेष ४-रूपान् चतुरः पदान् विधाय कुमारसम्भव १ मेघदूत २ रघु ३ विशेष ४-नामकं काव्यचतुष्टय कृतवान्, तेषु विशेषाभिधकाव्यमेतदेव अपर नाम ऋतुवर्णनकाव्यं, गिरिनगरसरित्सरोवर-कमलाकर-मलयानिल-पुष्पावचय-चन्द्रसूर्योदयास्तमय-स्व(स)र्गवधवर्णनादिकाव्यलक्षणानि विनैव षड्ऋतुवर्णनमात्रकमेवास्ति, तथापि महाकविश्रीकालिदासकृतत्वान्महाकाव्यमुच्यते............आदि ।

CLOSING

आलक्षचन्दनरसाः स्तनसक्तहाराः कन्दर्पदर्पशिथिलीकृतगात्रयष्टयः ।
मासे मधौ मधुरकोमलभृङ्गनादैः, नार्यो हरति हृदय प्रसभं नराणाम् ॥२४॥

व्याख्या—नार्यो वनिताः मधौ चैत्रे मासेऽथवा मधौ वसते मधुरकोमलभृङ्गनादैः मधुरा मिष्टाश्च कोमलाश्चते भृङ्गनादा भृङ्गमदशा ये नादा ध्वनयस्तैर्नराणां पुंसां हृदयं प्रसभ हठात् हरति वशीकुर्वन्ति, किंभूता नार्यः आलक्षः प्राप्तः अगेऽर्थाल्लेपित-चदनरसो याभिस्ताः, आलिप्तचंदनरसा इत्यपि पाठः ।

+ + +

वसंततिलकावृत्तानि सूरीन्द्रसौधर्मिरकीर्त्तिसूरिभिः ।
वृत्तौ कृतायामृतुवर्णनाभिधे काव्ये वसंततु विशेषलक्षणः । षष्ठो हि सर्गः

COLOPHON

इति श्रीविशेषमहाकाव्यटीकायामृतुसमुदाये वसंततुवर्णनो नाम षष्ठः सर्गः ।

## 6270. कल्पसूत्रलेखनप्रशस्तिः

॥र्द्दं०॥ स्वस्ति ॥

ॐ केशवंशः प्रथितः प्रशंसः श्रियां निधिः सर्वमहत्वपात्रं,
बभूव तत्राधिकनागदेवः सदा वरिष्ठः कृतवीरदेवः ।
तदगजो माणिकनामधेयः माणिक्यवत् सः सुविराजमानः ।
तन्नंदनो वित्तवतां स्मृतिज्ञः पालोऽमृतान्यः किल वस्तुपालः ॥२॥

॥शुभं भवतु॥ ॥कल्याणमस्तु श्रीचतुर्विधसघस्य ॥छा॥ श्रीः

## 6272. कार्त्तवीर्य्योदयकाव्यम्

OPENING

श्री गणेशाय नमः ॥

अधिवदनमुमायाः सव्यमुद्दामभावं, मुकुलितमपि जाग्रद्दक्षिणं धर्ममेधे ।
स्मरवपुषि च वामं यस्य नेत्रं तृतीयं, स भवतु मम भूत्यै वल्लभः शैलजायाः ॥१॥

प्रतिदिनमतिवेलं भूभृता धर्मभाजा, विविधचरितबधं मंगलं तुंगयंतः ।
विदधति निजकर्त्तुः सत्कवेर्दीर्घमायुः, न च रसपरिपाकप्रायणीयैर्यशोभिः ॥२॥

CLOSING

एवं देवा हैहयं कार्त्तवीर्यं स्तुत्वा नत्वा पूजयित्वा च सर्वे।
स्वं स्वं स्थानं स्थानिते राममुख्या जग्मुश्चेष्टां तस्य हृष्टाः स्मरंतः। ४४॥

यो विद्वद्द्विजराजराजितगुणान्पुण्येन जन्माप्तवान्,
भट्टश्रीपुरुषोत्तमात्कुलमणेर्दुर्गाम्बिकानन्दनः।
तेनोक्ते सति चंद्रचूडकविना श्रीकार्त्तवीर्योदये
काव्येऽपूरि चतुर्दशः श्रुतिसुखः सर्गोपवर्गोज्वलः ॥४५॥

COLOPHON

इति श्रीचन्द्रचूडविरचिते कार्त्तवीर्योदये काव्ये चतुर्दशः सर्गः।

संवत् १९४१ शाके १८०९ लिखतं नानूरामब्राह्मणदवीचिवंशोद्भवः॥ शुभं भवतु॥ श्रीः॥

## 6273. कौतुकभ्रमरी

OPENING

श्रीगणेशाय नमः॥

यद्रोमरन्ध्रपूर्ताविभवन्सप्तापि जलधयोऽशक्ताः।
तं नंदगोपपत्नी स्नापयति स्वाञ्जलिस्थतोयेन॥१॥

निवसंति यस्य रोम्णि ब्रह्मकटाहा यथावकाशेन।
चित्रं स हरिः शेते पंचवितस्तिप्रमाणकदोले॥२॥

CLOSING

वर्वर्ति सर्वसरितामुपरि नदीयं यमानुजा यमुना।
स्नानं पानं कुर्वन् क्रीडामकरोद्धरिः स्वयं यस्याम्॥७०॥

वृन्दावनसस्थानां वृक्षाणां केन वर्ण्यते भाग्यम्।
येषां पत्रैः पुष्पैरकरोत्कृष्णः स्वकीयतनुभूषाम्॥७१॥

रे जीव! चिन्तयसि किं चितायुक्तो दिवानिशं रहसि।
कथयस्व मामहन्ते दिव्यं कथयामि साधनं श्रेष्ठम्॥७२॥

COLOPHON

इति कुतूहलपंक्तिकृतकौतुकार्याः श्रीकृष्णचरणसरोजभ्रमर्यः सन्तु।
श्रीमद्राधाकृष्णचरणारविंदार्पणमस्तु।

शाके १७९१ चैत्रवदी शुक्रवार।

## 6274. विषमव्याख्या-काव्यानि

OPENING

श्री सर्वज्ञाय नमः॥

खाटपाटवृषमाटनगारीडालडालकरवातहुडाटा।
एतयाशु तव कीर्तिप्रतुष्टा ग्रामसीमसहितं प्रदिशतु॥१॥

खे आकाशे अटति चरंति खेटाः पक्षिणः तेषां पाति रक्षति खाटपाटः, वृषभेनाटतीति वृषमाट् ईश्वरः, नगारिः इन्द्रः, इडया भातीति इडालश्चन्द्रः इलयोरैक्ये लाभकरो विनायकः, हुडेन मेघेन अटतीति हुडाटोऽग्निः॥१॥

कान्तया कान्तसंयोगे किमकारि न वोढया ।
अत्रापि कथित श्लोके यो जानाति स पण्डितः ॥२॥

CLOSING

हंसाली कमलं विलोक्य तमसा निद्रागमच्चाविलं,
का सेनाकुलितासनोभवलया शक्त्यामयी तत्कथं ।
जायेत स्पृहयालुरेतदधिकः को नो भवत्यादरः ॥३२॥

COLOPHON

इति विषमव्याख्याकाव्यानि क्रियाकर्तृकर्मगुप्तानि ॥ शुभमस्तु॥

## 6278. गङ्गापुरीविलासः

OPENING

श्री गणेशाय नमः ।

पद्मालया फणिभृदङ्कितमूर्धशोभा, बालातपच्छवितनुर्मंयनाशकर्तृ (र्त्री) ।
माता त्रयस्य जगतां जयति प्रकामं, लक्ष्मीः पवर्गरचिताप्यपवर्गदातृ(त्री) ॥१॥

गङ्गापुरीविलासख्ये शतपद्यविशोभिते ।
काव्ये निजकृते टीकां कुर्मः प्रीतिरसामिमाम् ॥२॥

तत्र चिकीर्षितग्रंथनिर्विघ्नसमाप्तिकामो मंगलमाचरन्निजेष्टकुलदेवतास्मरणात्मकं निबधमाह–गले इति । इद समुद्रं प्रति लक्ष्मीवचन हे गुरो, हे तात, मृगदृशां सखीनां गले न्यस्ता अर्पिता माला मौक्तिकस्रक् निम्न नीचैर्यथा तथा परिपतति । मे इति मम हृदि हृदये औन्नत्यं उन्नततां व्रजति । कुचोद्भवं ज्ञात्वेति भावः । तेन मालोन्नतपतनेन उरः हृदय कठिन सत् कचुक्यां वस्त्रविषये अडति, अड् उद्यमे लट्, तत्तस्मात् कारणात् उपाय कुरु ।

श्री गणेशाय नमः ॥

गल न्यस्ता माला परिपतति निम्नं मृगदृशां,
सखीनामौन्नत्यं व्रजति हृदि मे तेन कठिनम् ।
उरो यत्कंचुक्यामडति तदुपायं कुरु गुरो,
यदत्येवं तात जलनिधिसुता नः सुखयतु ॥१॥

CLOSING

इतीति । इति पूर्वोक्तप्रकारेण दिगिव दिक्प्रदर्शनमिव यथा तथा 'बापट' इति उपाख्य उपनाम यस्य स चासौ विद्वज्जनेषु श्री प्रतिष्ठा यस्य नह्यतश्चेति कम् । शेषाद्रिभाषेति वा स चासौ तात्याख्यः पंडितस्तस्य शिष्येणच्छात्रेण । अत एव बहुविधानां नयानां शास्त्राणां दर्शनं यस्य तेन । एव गुरुकुलमुक्त्वा स्वकुलमाह - अथेति, अथ विद्वत्सु प्रपूज्या श्रीर्यस्य तस्य गंगाधराख्यस्य पुत्रेण प्रमुदितानां रसिकानां प्रशस्त-चित्तानां ईषिणा मित्रेण गोडबोलोपनाम्ना वैराज्यधान्यां नाम नगर्यां वासस्य निवासस्य ईषिणा वेङ्कटेशेण नाम कविना विरचितं शतकं शतदलो(कं) ।

इति दिगिव यथानयं बापटोपाख्यविद्वज्जनश्रीकतात्याख्यशिष्येण वै ।
बहुविधनयदर्शनेनाथ गंगाधराख्यस्य विद्वत्प्रपूज्यश्रियः सूनुना ॥

प्रमुदितरसिकंषिणा गोड्बोलोपनाम्नाऽथ वैराज्यधानीनिवासैषिणा ।
विरचित: शतकोऽयिहो वेङ्कटेशेन गंगापुरीपूर्वकोऽयं विलास: श्रिये ॥१००॥

COLOPHON

इति श्रीमद्वेङ्कटेशविरचितो गगापुरीविलास: सम्पूर्ण: ।

## 6302. गोविन्दविलासकाव्यम्

OPENING

ॐ विनायकभारतीभ्यां नम: ॥

स्मितमिषोम्मिषदंशुतरगितव्रजवधूजनरागपयोनिधि: ।
शमनभीतितम: शमनो हरेर्मुदञ्चयतान्मुखचन्द्रमा: ॥१॥
नवमिवोन्नतमम्बुदमण्डल वलयितं तरुणारुणरश्मिभि: ।
सुरतलग्नरमाकुचकुङ्कुम शिति शिवाय ममाशु हरेरुर: ॥२॥

CLOSING

श्रीमल्ल: सविदग्धबद्धंकिशिरोऽलकाररत्नाङ्कुरो,
मदोदर्यंपि य कवीन्द्रतिलकं प्रासूत भोज सुतम् ।
तस्यास्मिन् रचिते लवरणाधीश-प्रसादावले:
श्रीगोविन्दविलासवाम्नि नवम: सर्गोऽगमत्पूर्णताम् ॥१००॥

COLOPHON

सम्पूर्णमिद श्रीगोविन्दविलासाख्य महाकाव्यम् ।

सं० १६०२ मार्गशीर्ष वदी ६

## 6309. चन्द्रलक्ष्मोत्प्रेक्षाशतकम्

OPENING

श्री गरोशाय नम: ॥

शुभ्रांशुमण्डले शुभ्रं भावयामि गजाननम् ।
यत्कुण्डलीशुण्डाभ्रनीलिमालाञ्छनच्छवि: ॥१॥
चन्द्रिकाक्षीरजलधौ मणिद्वीपमिदं शशी ।
लाञ्छनच्छद्मना तत्र स्थित: श्रीवत्सलाञ्छन: ॥२॥

CLOSING

आसीत्काशीनिवासी त्रिजगति विदिते भीमपुर्यच्छवंशे,
श्रीवेणिभट्टनामा फणिभणितिमहापंडितो दाक्षिणात्य:
तत्सूनु: प्रौढविद्वान्नरहरिसुकविर्वर्णयामास चित्रै-
रुत्प्रेक्षाचारुकाव्यै: शतकपरिमितैर्लक्ष्म शीतभानो: ॥१०॥

COLOPHON

इति श्रीविद्वद्(वर)कविभट्टनरहरिविरचितं चन्द्रलक्ष्मोत्प्रेक्षाशतकं सम्पूर्णम् ।

## 6312. सूर्यशतकम् (चित्रभानुशतकम्)

ॐ नम: सूर्याय ॥

जंभारातीभकुम्भोद्भवमिव दधत: सान्द्रसिन्दूररेणुं,
रक्ता: सक्तैरिवोद्यदुदयगिरितटीधातुधाराद्रवस्यं ।

प्रायःस्यातुल्यकालं कमलवनरुचे वारुणा वो विभूत्यै
भूयासुर्भासयन्तो भुवनमभिनवो भानवो भानवीयाः ॥९९॥

CLOSING

देवः किं वा धवः स्यात् प्रियसुहृदथ वाचार्य आहोस्विदार्यो,
रक्षा चक्षुर्नु दीपो गुरुरुत जनको जीवितं बीजमोजः ।
एवं निर्णीयते यः क इव न जगतां सर्वथा सर्वदासौ ।
सर्वाकारोपकारी दिशतु दशशतार्भीशुरभ्यर्थितं वः ॥१००॥
इति भगवद्वर्णनं

COLOPHON

इति श्रीमहाकविमयूरकृतसूर्यशतकाभिधस्तोत्रं समाप्तम् ।
शुभमस्तु ॥

Post-colophon :-

संवत्सरे विक्रमार्कान्मागाश्वं किंछ् सम्मिते ।
आश्विनस्यासिते पक्षे सप्तम्यां भृगुवासरे ।
कश्मीरमंडले रम्ये दुर्गादत्तोऽलिखत्सुधीः
तेन मे सततं भूयात्प्रसन्नः पद्मिनीपतिः ॥

## 6327. नलोदयः सटीकः

OPENING

सर्वज्ञाय नमः ।

प्रणम्य परमानन्दं यदुनन्दनमादितः ।
नालोदयो मया टीका यथामति वितन्यते ॥१॥

बुध्वा बुधान् यमकसागरपारकामान्, श्रीशंकरैकशरणः करुणार्द्रचेताः ।
टीका सुपोतसदृशा हि नलोदयस्य, प्रज्ञप्रियामलघुराम ऋषिः करोति ॥२॥

\+ \+ \+

कविरधुना प्रारिप्सितग्रंथनिर्विघ्नपरिसमाप्तिकामो यथेष्टं निर्दिष्टेष्टदेवतास्मरणलक्षणं मंगलमाचरति ।

हृदय सदा यादवतः पापाटव्याङ्कुरासदायादवतः ।
अरिसमुदायादवतस्त्रिजगन्मा गाः स्मरेण दायादवतः ॥१॥

हे हृदय, मानस, सदा सर्वदा यादवतः श्रीकृष्णात् त्रिजगत् त्रैलोक्य मा गाः मा गच्छ, श्रीकृष्ण विहाय त्रैलोक्यसुखार्थमन्यत् साधनं मा कुरुष्वेत्यर्थः ।

\+ \+ \+

CLOSING

सुरत्राणे तथा साहिशलेमे शासति क्षितिम् ।
पत्तनाख्ये महादुर्गे राजशल्ये च राजनि ॥१४॥
युवराजे भोजराजे टीकेयं पूर्णतामगात् ।
कृता रामर्षिमिश्रेण वृद्धव्यासस्य सूनुना ॥१५॥

COLOPHON

इति श्रीमद्वृद्धव्यासात्मजरामऋषिविरचितायां रविदेवविरचितमहाकाव्यनलोदयटीकायां यमकबोधिन्यां नलराज्यप्राप्तिर्नाम चतुर्थ आश्वासः ॥ समाप्तश्चायं नलोदयः समाप्यः ।

संवत् १७१६ ज्येष्ट मास शुक्ले पक्ष तृतीयायां लिखितं हीरसुंदरेण मुनिना ।

## 6328. नलोदयकाव्यम्

OPENING

ॐ नमः श्रीपरमात्मने रामचन्द्राय ।

हृदय सदा यादवतः पापाटव्याङ्कुरासदायादवतः ।
अरिसमुदायादवतुस्त्रिजगन्मा गाः स्मरेण दायादवतः ॥१॥

यो जनिना गोपीतश्चचार यो वल्लवाङ्गनागोपीतः ।
भूर्येनागोपीतः कसाद्यो द्वेषमेव नागो पीतः ॥२॥

CLOSING

समुद्धृताशालीनां करेण कणिकाग्रकचिजिताशालीनां ।
दिनभर्त्ता शालीनामिव नलिनीमथ समुत्थिताशालीनां ॥३॥

\+ \+ \+

## 6348. भर्तृहरिकृतशतकत्रयम्

OPENING (ct. v. 3)

टीका—नरः प्राणी मकरस्य वक्त्र मुख तस्य दंष्ट्राः तासा अन्तरं मध्यं तस्मात् मकरवक्त्रदंष्ट्रान्तरात् प्रसह्य बलात्कारेण मणि मुक्तामणि उद्धरेत् गृह्णीयात् । समर्थः प्राणी समुद्रमपि सतरेत् पार गच्छेत्, किंविशिष्टं समुद्र, प्रचलन्त य ऊर्म्मिकल्लोलास्तेषा मालाः श्रेणयः ताभिः आकुलः सकुलः त, प्रचलदूर्म्मिमालाकुल । विद्यावान् प्राणी भुजङ्गमपि फणिनमपि पुष्पवत् शिरसि मस्तके धारयेत्, किंभूत भुजङ्ग कोपित क्रोधयुक्तं, तु पुनः । प्रतिनिविष्टः समीपोपविष्टो योऽसौ मूर्खजनः तस्य यः चित्त प्रतिनिविष्टमूर्खजनचित्त नाराधयेत् प्रतिबोधयेत् इत्यर्थः । पृथ्वीछन्दः, समाधिविषमालकारैस्तृतीयकाव्यस्यार्थः ॥३॥

\+ \+ \+

... ... रेत्प्रसरदूर्म्मिमालाकुल
भुजङ्गमपि कोपित शिरपि पुष्पवद्धारयेन्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥३॥

लभेत सिकतासु तैलमपि यत्नतः पाडयन् पिबेच्च मृगतृष्णिकासु सलिल पिपासार्दितः ॥
कदाचिदपि पर्यटन् शशिविषाणमासादयेन्नतु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥४॥

CLOSING

समोहयन्ति मदयति विडवयन्ति, निर्भर्त्सयन्ति रमयति विषादयन्ति ।
एताः प्रविश्य सदय हृदय नराणा, कि नाम वामनयना न समाचरति ॥१०५॥

यां चिन्तयामि सतत मयि सा न रक्ता, सा चान्यमिच्छति जन स जनोऽन्यसक्तः ।
अस्मत्कृतेऽपि परिकुप्यति काचिदन्या, धिक् तां च त च मदन च इमां च मां च ॥१०६॥

COLOPHON

इति श्रीभर्तृहरे वैराग्यशतक तृतीय पूर्णत्वमवीभजत् ॥

## 6349. नीतिशतकं शृङ्गारशतकञ्च

OPENING

ॐ श्री गणेशाय नम: । वाग्वादिन्यै नम: ।

परमात्मानमानम्य परमानन्दविग्रहं ।
सज्ज्ञानप्राप्तये नृणां कुर्वे सन्नीतिवर्णनम् ॥१॥

श्रीमत्पुष्करव्यासस्य सुत: श्रीनाथसंज्ञक: ।
सन्नीतिशतकस्यास्य टीकां कुर्वे यथार्थत: ॥२॥

यामिति अस्यार्थ:–प्रथमं प्रस्तावकथा सर्वलोकेषु प्रसिद्धा ततो लोकत एव ज्ञातव्या, इदानीं तस्य राज्ञो वैराग्योत्पत्यादिकारणमाह- अहं यां मदीयां स्त्रियं सततं निरन्तरं चिन्तयामि स्मरामि सा स्त्री मयि विरक्ता उदासीना, उदासीनत्वे कारणमाह, साऽपि अन्यं जन मदपर पुरुषमिच्छति । स जनस्तत्कांक्षितो जन: अन्यासक्त: वेश्यासक्त: इत्येवं भूतावसरे, अस्मत्कृते मन्निमित्तं च पुन: काचित् अन्या परितुष्यति संतोषं करिष्यति, अपितु कापि नेति, एवमुक्त्वा विरक्त: सन् सर्वान् धिक्करोतीति तदेवाह, प्रथमं तां वेश्यां धिक् या मां फलं दर्शयामास, च पुन: तं महामात्रमपि धिक् यो राजपत्नीं प्राप्य वेश्यारतोऽभूदिति, च पुन: मदन कामदेवमपि धिक् यो मदन: कुलवतां मनांसि इतस्ततश्चालयतीति ।

\+ \+ \+

CLOSING

युवतिषु नारीषु इदं मंडनं शोभाभूषणं स्वाभाविकमेव वर्त्तते सहजोत्पन्नमेवेति, तन्मंडनं वर्णयति, वक्त्रं स्त्रीमुखं चन्द्रविडबि चद्रबिम्बविजयि पुनर्नार्य्या लोचने नेत्रे पंकजपरीहासक्षमे कमलपरिहासस्य करणे समर्थे, पुनर्वर्ण: कायारंग: स्वर्णं कनकं अपाकरिष्णु: तिरस्कर्त्ता, पुन: कचानां चय: समूह: केशनिचय: अलिनीजिष्णुर्भ्रमरीजेतु-शील:, श्यामा भ्रमरी यथा भवति तदुपमा केशा इत्यर्थ: ।

वक्त्रं चन्द्रविडंबि पंकजपरीहासक्षमे लोचने,
वर्ण:स्वर्णमपाकरिष्णुरलिनीजिष्णु: कचानां चय: ।
वक्षोजाविभकुम्भविभ्रमहरौ गुर्वी नितंबस्थली,
वाचो हारि च मार्द्दवं युवतिषु स्वाभाविकं मंडनम् ॥२४॥

नामृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनी,
सैवामृतलता रक्ता विरक्ता विषवल्लरी ॥२५॥

ॐ नमो भगवते वासुदेवाय श्रीकृष्णाय नम: ।

श्री श्री श्री श्री श्री श्री श्री

## 6362. नीतिशतकम्

OPENING

श्रीगणेशाय नम: ।

त्रिषु देवेषु मरांतं भृगुर्बुभुत्सु: परीक्ष्य हरिमेकं ।
मेने रधिक महिम्ना हेव्यस्सर्व्वोत्तमो विष्णु: ॥१॥

रुक्मांगदं स्वपुत्रं निहत्य खड्गेन मोहिनीवचसा ।
सत्यां ररक्ष वाचं न सकटेऽपि त्यजेद्धर्मम् ।।२।।

CLOSING

कुतुकाय कोविदानां मूढमतीनां महोपकाराय ।
निरमात्कविर्गुमानी शतोपदेशं प्रबंधममुम् ।।१०२।।

COLOPHON

इति नीतिशतकं समाप्तम् ।।

## 6365. पदाङ्कदूत-काव्य-टीका

OPENING

श्री गणेशाय नमः ।।

नत्वा कृष्णपदद्वन्द्वं राधामोहनशर्मणा ।
पदाङ्कदूतविवृतिः क्रियते परमादरात् ।।१।।

श्रीकृष्णे मथुरां गतवति तद्विरहोन्मथितचित्ततया कथंचिदपि गृहे स्थातुमशक्नुवाना प्रेमिनस्तस्य मथुरायां गमनं समयति असंभावना च कुत्रचिदत्रैव रहसि समवस्थानं कयाचित् दुर्जनतया वशीकृतस्य तस्य किं-वा मादृशा प्रेमपरिचर्यार्थं संकोचावलंबन-लक्षणमिति विचिन्तयती निखिलवृंदाटवीपरिक्रमणाय कृतोत्थाता श्रीमती राधा प्रणयोपरचितप्रागाचरीतेत्यर्थः ।

CLOSING

......अथवा-शब्दो नान्त्यः न विनाशीति मीमासकमतमादृत्य न्यायमतं निर्वोढत (निबद्ध) मितिभावः अत्र दूतवचनमपि तदिति । यतो वचनमपि कृष्णवचनमपि तत्सर्वदैव रचितो वर्त्तमानं कृष्णसाक्षिपाते तादृश सर्वदैव चित्ते वर्त्तमानं, पुनः काकाक्षिन्यायेन तादृशशब्दान्वयेन किन्तु तादृश वस्तु क्षणिकं वस्तु प्रेमैवेत्यर्थोऽवसेयः । ननु प्रेम्णा क्षणिकत्वे भवतीनामपि कृष्णप्रेम्णः क्षणिकत्वेन समदौत्य निरर्थकं स्यादित्यत्र आह प्रियतमकृतं कृष्णकृतमिति भावः । दुःखातिशयमावेदयितुं सपत्नीश्च पुरांगनासु क्षणिकप्रेमनिरासमाह तच्चेति तच्च क्षणिक प्रेम च गोपांगनानामेव न तु पुरस्त्रीष्विति ।।४५।।

COLOPHON

इति श्रीराधामोहनविद्यावाचस्पतिभट्टाचार्यगोस्वामिविरचिता पदाङ्कदूतटीका समाप्ता ।

सं० १८७१ पौ० सुदी ६

## 6366. पादारविन्दशतकम्

OPENING

श्रीगणेशाय नमः ।।

ॐ श्रीकामाक्ष्यम्बा श्री पादुकाभ्यो नमः, ॐ श्रीं ऐं क.मनाथ श्री पादुकाभ्यो नमः ।। ॐ काम्यानगरी श्रीपादुकाभ्यो नमः. ॐ श्री कांचीपुरी श्रीपादुकाभ्यो नमः ।। ॐ श्री कविसार्वभौमसुधासहचरी वाणी श्री पादुकाभ्यो नमः ।

ॐ महिम्नः पन्थानं मदनपरिपथिप्रणयिनी
प्रभुर्निर्णेतु ते भवति यतमानोऽपि कतमः ।

तथापि श्रीकांचीविहृतिरसिके कोऽपि मनसो
विपाकस्त्वत्पादस्तुतिविधिषु जल्पाकयति माम् ।।१।।

**CLOSING**

इद यः कामाक्ष्याश्चरणनलिनस्तोत्रशतक,
जपेन्नित्यं भक्त्या निखिलजगदाह्लादजनकम् ।
स विश्वेषां वन्द्यः सकलकविलोकैकतिलकः,
चिर भुक्त्वा भोगान्परिणमति चिद्रूपकलया ।।१०१।।

**COLOPHON**

इति श्रीमूककविसार्वभौमकृत - पञ्चशत्यां तृतीयस्य पादारविन्दशतकस्य सुवर्णमालाख्या टीका समाप्ता ।

## 6368. प्रार्थनाशतकम्

**OPENING**

।। श्री गुरुपादुकायै नमः ।।

प्रार्थनाशतकं कर्तुमुद्युक्तोऽस्मि शिवेऽधुना ।
शृणुष्व मम दीनस्य पाटयाशु तथा कुरु ।।१।।

जगत्प्लावन दैत्यराजाननतान्सदा हंस्युमे हेऽम्बधीस्त्वम् ।
कुतो नाधुना वीर्यहीनान् किरातानिमानाशु संहृत्य साधून्पियुर्षि ।।१।।

किराता इमेऽरीरधन्स्त्वां तपोभिः पुरा नेह जन्मन्युमेऽ रीरधंते ।
पुनः प्रत्युत प्रोज्वल धर्ममघ्नश्चतुर्वर्णविप्लावनं चाप्यकुर्वन् ।।२।।

**CLOSING**

यद्यरिकिरातजनदुःखनिवृत्तिकामेनाभ्यर्थिताऽनुकुरुषे यदि तन्तथैव ।
स्तोष्ये सदा मयि तवास्ति कृपेति हर्षात्सर्वे जना भुवि भवतु सुखेन पूर्णाः ।।१००

प्रार्थनाशतकं पूर्णमभवद्येन हेतुना ।
तूर्णं कुरुष्व तत्पूर्णं स्वाः प्रजाः परिपालय ।।१०१।।

कनकहंसकनूपुरकांतयोः, पविनिरंतरमौक्तिकदामयोः ।
सरुतहंसयुगभ्रममूलयोर्नखमिषाद्दृशघातकचन्द्रयोः । १।।

अगरुचन्दनचर्चितशोभयोः, कुसुमदामविचित्रितभूषयोः ।
मृगमदागरुधूपितगंधयोः, शशिकृतोज्वलदीपसुशोभयोः ।।२।।

कमलचक्रसुचामरचिह्नयोः, प्रणतभक्तहृदब्जनिवासयोः ।
मम हृदंबुजखेलननीरयोश्चरणयोर्मन एतु निरंतरम् ।।३।।

**COLOPHON**

इति श्रीमत्सत्यानन्दपूज्यपादशिष्यविमर्शानन्दविरचितं प्रार्थनाशतकं सम्पूर्णम् ।।
संवत् १६०० पौष शु० १० भानुवासरे ।

## 6370. ऋतुवर्णनम्

**OPENING**

।। श्री गणेशाय नमः ।।

निजार्धहृतशंकरं सकलदैत्यनाशकरं, जगत्त्रितापशकरं स्वजनचित्तनिदशंकरम् ।
ममाशु भजतः पुरधृतबसुंधरांतः पुरं, करोतु च निजं पुरं पशुपतेः सहान्तःपुरम् ।।१।।

श्रीसामराजगुरुनाथपदं विभाव्य, श्रीसामराजपदपद्ममिलिंदकोऽहम् ।
श्रीकामराजपितृपत्परिसेवनेन, श्रीकामराजपृतनारचनां करोमि ॥२॥

CLOSING

अर्धोत्थितस्य विस्मृतपानीयस्यापि पार्वतीहृतार्घस्य,
अन्योन्यस्पर्शप्रस्वेदजलाञ्जलिर्जयति शम्भोः ॥६६॥

वक्षःकपाटपाटनकोऽपि दितेः सुतस्य मन्नखराः ।
लक्ष्मीकठिनकुचस्तलभग्ना इति विस्मितो जयति नृहरिः ॥१००॥

COLOPHON

इति दीक्षितव्रजराजकृतं द्वितीय शतकं समाप्तम् ॥

## 6371. बुद्धसिंह-प्रशस्तिश्लोकाः

OPENING

॥ श्रीगणेशाय नमः ॥

त्वद्दोर्दण्डकरालखङ्गविकटप्रद्योतधारादरी-
गर्भा च्छ्रीनृपबुद्धसिंह नितरां जानीमहे निःसृतः ।
वैरिव्रातमदांधवारणचमूविद्रावणः सततं
चित्रं सर्वविपक्षदेशविपिने तेजो हरिर्जृम्भते । १॥

तच्चित्तेषु मनोरथादिकुमुदप्राभारक म्लानयन्,
तच्छौर्यादिमदान्धकाररचना प्रौढे रणे दारयन् ।
तद्रामामुखकान्तकांतिमहरन् श्रीबुद्धसिंह प्रभो,
नित्यं त्वत्प्रबलप्रतापतपनस्तापं करोति द्विषाम् ॥२॥

CLOSING

श्रीबुद्धप्रभुहस्तवारिद ! भवत्सौवर्णवर्षाद्भुत-
प्रादुर्भूतविमुद्रसांद्रविलसत्सामुद्रपूरे परे ।
आकंठं परिमग्नयाचकगणान्निर्गत्य द्रारिद्र्यकम्
मग्नोन्मग्नमिमं पुनः पुनरभूनिर्मग्नमेव क्षणात् ॥१३१॥

श्रीमद्वीरमृगेन्द्रवक्त्रनृपतेर्दोर्दण्डधाराधर-
प्रादुर्भूतसुवर्णवृष्टिनिवहैर्भूदेवभूस्तृप्तिताम् ।
याति प्रत्यहमेति पक्षे(क्ष)निकरैरालोक्य लज्जानतः,
कालेऽपीह मया न वर्षितमिति स्वाराड्ववर्ष क्षणात् ॥१३२॥

COLOPHON

इति संस्कृतः श्लोकः सम्पूर्णम् ॥
मिति ज्येष्ठ शु० १०, सं० १६०१० छ ।

## 6372. बखतेसरहस्यम्

OPENING

श्रीगणेशाय नमः ॥

अथ बखतेशरहस्यं लिख्यते—

स जयति बषतेशभूमिपालो हरिरिव संप्रति पुण्डरीकनेत्रः ।
सरसिजनिलयापतिः प्रजानामवनकरः पुरुषोत्तमो हि हृद्यः ॥१॥

सुवर्णदानैर्जितकर्णभूपस्तनुश्रिया निर्जितवस्त्ररूप: (?) ।
विराजते श्रीवषतेशभूप: स्मेराक्षनिर्भर्त्सितचन्द्ररूप: ।।२।।

CLOSING

न जनेन केन समागतेन ययैदृशा न विलोकिता
तरुणी इव प्रगतारुणायतपंकजच्छविलोचना ।।
स्मितशोभितस्वमुखारविन्दकलानिर्जितचन्द्रमा
निजरू(प)निंदितरोचना विहिताश्ववाहकशोचना ।।३६।।

अथ भूपतिर्गृहमाययौ निजमुज्वलच्छविधारको
गजतोऽवतीर्य स शक्रविक्रमचक्रसंक्रमकारक: ।।
बहुदानवारिविलक्षणार्णवजातशुभयश: शशी
निशि वा दिवा सकलासु दिक्षु च यस्य सप्रति राजते ।।३७।।

COLOPHON

इति श्रीमाणिक्यमैथिलकृते वषतेशरहस्ये गृहागमनं नाम सप्तम: सर्ग: ।

शाकेस्त्रकठयुतपक्षयुतागचन्द्रे चैत्रे कुजे नु दशमीत्यवलक्षपक्षे ।
माणिक्यमैथिलबुध: समाप काव्यं भावैर्युतो वषतेशरहस्यमित्थम् ।।१।।

Post-colophonic

संवत् १८६६ शाके १७३१ महामांगल्यमासानां मासोत्तममासे भाद्रपदमासे शुभे शुक्लपक्षे पुण्यस्थितौ द्वितीया रविवासरे शुभमस्तु ।।

श्रीरस्तु ।

## 6373. भावविलास:

OPENING

।। श्रीगणेशाय नम: ।।

य: फल्गूकृतफाल्गुनो रणभुवि प्रौढप्रतापानल-
ज्वालाभि: प्रतिपक्षपक्षविपिनश्रेणिर्ददाह क्षणात् ।
योऽभूद्भूसुरभूरुहोऽत्रभगवद्दासो निवास: श्रिया
तस्मादाविरभूत्प्रभूतमहिमा श्रीमानसिंहो नृप: ।।१।।

संग्रामोद्दामधाम प्रतिभटपृतनाकंठरक्तोपरक्ता
येनाकीर्य स्वसेनाश्चतुरुदधिजलै: क्षालिता खड्गधारा ।
गाढ शस्त्राभिघातादरिमदकरिणां दानमाच्छिद्य सद्यो,
हस्ते न्यस्तं च येन क्षपितरिपुकुले दक्षिणे दक्षिणेन ।।२।।

CLOSING

सद्गुणानां समुद्रेण रुद्रेण ग्रथिता गुणै:,
कठस्था कंठमालेयं केषां न कुरुते श्रियम् ।।३५ ।

विद्याविलासपुत्रस्य न्यायवाचस्पतेरियम् ।
काव्यालापविदग्धानां मुद निर्मातु निर्मिति: ।।३६।।

COLOPHON

इति भावविलास: समाप्त: ।।

## 6374. भूमीश्वरपञ्चाशिका

**OPENING** अथ भूमिश्वरपंचाशिका—

मातर्वाणि नमस्कुर्वे भूमीश्वरगुणार्णवम् ।
तरितुं त्वं तरिर्भूयास्तातततोऽपि ततान यम् ॥१॥

हरिन्मणिश्याममहार्हवेषं भूमीश्वरेशं ककुभां पतीशम् ।
मृगव्य-यात्रा-समयेषु वज्री पाणौ गदी दंडधरो ननाम ॥२॥

**CLOSING** सीतारामो भूपतीन्विसमरान्तातत्यक्तान्मातृगोजातिहंतृन् ।
सेवे लोभाद्धर्मसिद्धयै विशिष्टो नाथोऽसि त्वं देहि तस्मा अभीष्टम् ॥४६॥

सीतारामो नाथपादारविंदं ध्यायन्मुक्तमैहिकामुष्मिक च ।
विद्याभ्यासी नाथभक्तो धरण्यां जीव्याद्यावत्पुष्पदन्तौ व्योम दीव्यात् ॥५०॥

**COLOPHON** ॥ इति भूमीशपंचाशिकाः ॥

## 6375 भूमीश्वराशी.शतकम्

**OPENING** श्री गुरुपादुकायै नमः ।

अथ भूमीश्वरनृपस्याशीः शतकम् ।

वंदे श्रीनाथपदपङ्कजं भूमीशो येन नाथति ।
विमर्शानन्दनाथेन कृतेनाशीः शतेन च ॥१॥

मातः कालि महाकालगृहिणि त्वत्पदार्चने ।
भूमीशस्य मतिर्भूयाद् येन जीवेत्समाः शतम् ॥२॥

**CLOSING** मातर्लक्ष्मि चतुर्वार्द्धिमेखलां पृथिवीमिमाम् ।
भूमीशः शासतु चिरं गोपायतु निज कुलम् ॥१०१॥

मातर्लक्ष्मि निजे काले पर्जन्यो वर्षतां भृशम् ।
विप्रान् रक्षतु भूमीशः शत वर्षाणि जीवतु ॥१०२॥

विमर्शानन्दनाथेन कृतमाशीःशत धिया ।
तेन नाथपदद्वन्द्वमावयोर्हृदि तिष्ठतु ॥१०३॥

**COLOPHON** इति श्रीभूमीश्वरनृपस्याशीः शतकम् ।

## 6378. मन्दहासशतकम्

**OPENING** श्रीगणेशाय नमः ॥

बध्नीमो वयमंजलिं प्रतिदिनं बन्धच्छिदे देहिनां
कदर्पागमतंत्रमूलगुरवे कल्याणकेलीभुवे ।

कामाक्ष्याघनसारपुंजरजसे कामद्रुहृच्चक्षुषां
मन्दारस्तबकप्रभामदजुषे मदस्मितज्योतिषे ॥१॥

CLOSING

क्रीडालोलकृपासरोरुहमुखी सौधाङ्गणेभ्यः कविः
श्रेणो वाक्परिपाटिकामृतझरी सूति गृहेभ्यः शिवे ।
निर्वाणाङ्कुरसार्वभौमपदवीसिंहासनेभ्यस्तव
श्रीकामाक्षि मनोज्ञमन्दहसितज्योतिष्कणेभ्यो नमः ॥

COLOPHON

इति श्रीमूककविसार्वभौमकृतपञ्चशतकेषु द्वितीयस्य मन्दहासशतकस्य सुवर्णमालाख्या टीका रावराजेन श्रीशोभनसिंहेन कृता समाप्ता शुभमस्तु ॥ श्री परदेवता क्षम्यतां, स्वमहिम्ना प्रीयतां, हृदि सन्निधीयताम् ॥२॥

## 6389· मेघदूतकाव्यं सटीकम्

OPENING

कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येन भर्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥१॥

टीका–कश्चित्कान्तेत्यादि, कश्चिद्यक्षो रामगिर्याश्रमेषु वसतिं चक्रे, निवासं कृतवान् । रामो दशरथात्मजस्तेन आश्रितो गिरिः, पूर्वं सीतान्वितो रामस्तत्र स्थितवानिति वा रामगिरिस्तत्राश्रमास्तपोधननिवासास्तेषु अनेन चात्र निवसन् रामोऽपि दैवाद्वियुक्तः सीतया सार्द्धं पुनः संयोगमाससाद तन्ममाप्येवं भूयादिति व्यज्यते । यद्यपि यक्षस्य एकाकित्वाद्रामगिर्याश्रमे इत्येकवचनमेव नाथ्यंत (?) चापि गाढोत्कठारणरणाकुलीकृतचेतसो नैकत्रावस्थानं संभवति कदाचित्......

CLOSING

तं संदेशं जलधरवरो दिव्यवाचाऽचचक्षे,
प्राणांस्तस्यां जनहितकरो रक्षितुं यक्षवध्वां ।
प्राप्योदंत-प्रमुदितमना सापि तस्थौ स्वभर्तुः
केषां न स्यादभिमतफलप्रार्थनाम्युन्नतेषु ॥१२४॥

COLOPHON

इति कालिदासकृतं मेघदूतमहाकाव्यं समाप्तम् ।

## 6390· मेघदूतकाव्यं, शिशुबोधिनीटीकान्वितम्

OPENING

श्री गणेशाय नमः ।

अनंगहारिणे नित्यं नृत्यशीलाय शूलिने ।
निरामयाय शान्तये (न्ताय) नमः कुर्म्मः पिनाकिने ॥१॥
जटावानप्यशूलो यो यश्चापर्णार्धविग्रहः
अपानिफलपातारं त वंदे स्थाणुमव्ययम् ॥२॥

× × ×

टीका—अस्ति किल विचकितजलधिवेलावलयोर्वीतलतिलकायिततनुरलका या धवलशैलहर्म्यहसित (-) नराधिराजराजधानी धनपतिदिक्पतिप्रतिपालिता नगरी तस्यां स यक्षाधिराजो निवसन् शशास.........

CLOSING

मार्जाराः नहि लोलुपाः शुकगिरः सिंहाश्च कस्तूरिका-
मोदेऽपि स्पृहयालवो न शिखिनां व्याधास्फुरत्ताण्डवे ।
प्रोद्यद्यौवनचंचुचन्द्रवदना भूपेषु नो यातवः
पापैरेवमदूषि भूरिति गुणग्राह्या (ह्य) स्त्रिलोके क्वचित् ।

COLOPHON

इति श्रीमेघदूताभिधकाव्यशाकल्यमियात् संवद्दृग्गिनकलिदिकाषड्गुणभूमानवर्षे ।

## 6394. मेघाभ्युदयकाव्यम्

OPENING

काचित्काले प्रमुदितमदन्नीलकठैर्घनागे (?)
व्योमाटव्यां प्रतिदिशमलं संचरन्मेघनागे (?)
बद्धारभ वदति वनिता स्म प्रवासाय कांत
कामश्चायं वहति हि तदा विस्फुरच्छायकांतम् ॥१॥
स्व मेघानां शितयति ततिमुक्तनादा नवानां,
निद्रा शम्भोः समयमहितां कुर्वती दानवानाम् ।
जातोत्कण्ठं पथिकवनिता मां दधानो निकामं,
वातोन्द्राशाप्रभवपवनो वर्द्धयन् कामिकामम् ॥२॥

CLOSING

विद्युल्लता लसति कांचन सन्निभारं,
धाम्ना वहति घनवति न भानिभारम् ।
उच्चैरसत्यविरत जलदास्तवारि—
रस्मिन्प्रयातु समये प्रिय यस्तवारिः ॥३८॥

COLOPHON

इति मेघाभ्युदयकाव्य समाप्तम् ।

## 6395. यदुवीरविलासकाव्यम्

OPENING

॥ ॐ श्रीगुरुभ्यो नमः ॥

अस्ति निस्तुलमहस्ति निशशी स्वस्तिकैरवचकोरसंसदां,
निर्भरामृतपयः प्रपूरिताः कम्बुरं वरचराभंकावलेः ॥१॥
मंडलाग्रसमुवीक्षणक्षण-त्रस्तचित्तनिखिलारिपक्षिणी ।
यत्र रंजितजनेव सूरकरे राज-शब्दमुचित जना जगुः ॥२॥

CLOSING

या परिपाल्य बालान्रेवासरःपुलिनसीमनि साकमेतैः ।
गत्वा निसृत्वरतटीद्रुमपुष्पगन्धे पूर्णोऽपि नित्यमुदयुक्त स तत्र भोक्तुम् ॥५७॥
अन्योन्यं च स्वय (-) तव्यं जनान्यपर्यंतस्तद्धि तन्मे न तु भवन इत्यालपन्तस्सहासं ।
फेलालेशं किमपि सरसं प्रक्षिपंतो मिथस्ते, बालालीला समु तरसा सजनं भुंजते स्म ।६६।

COLOPHON इति वंतिद्योतिदिवाप्रदीपांकसत्यमंगलरत्नखेटश्रीनिवासदीक्षितपौत्रेण केशव- दीक्षितपुत्रेण अय्यादीक्षितेन कृत:(ते)कवित्रयविरचिते यदुवीरविलासे सप्तमस्सर्गः ।।६

## 6396. योगशतकम्

OPENING

···पाणिपुटके भिक्षाटनं कारित: ।
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ।।३५।।

कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वा वनेऽथवा ।।३६।।

CLOSING

करे श्लाघ्यस्त्याग: शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयभुजयोर्वीर्यमतुलम् ।
हृदि स्वच्छा वृत्तिः श्रुतमधिगतं च श्रवणयोः
विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ।।८१।।

वहति भुवनश्रेणी शेष: फणाफलकस्थिता
कमठपतिनाम·························

(Incomplete)

## 6397. रसरत्नहारशतकम्

OPENING

श्रीगणेशाय नम: ।
निरीक्ष्य विष्णोश्चरणारविन्दनखेषु लक्ष्मीः प्रतिबिम्बमस्मात् ।
दशावतारादपि मन्यमाना स्वाधिक्यमास्तां विदुषां सुखाय ।।१।।

CLOSING

गुरुपादाम्बुजद्वन्द्व-प्रसादावाप्तसन्मतिः ।
त्रिपाठीशिवरामाख्यो हारं पूरितवानमुम् ।।

COLOPHON इति त्रिपाठीशिवरामकृतो रसरत्नहारः समाप्तः ।

## 6402. राधाविनोदकाव्यम्

श्री गणेशाय नमः ।।

कुशेशयदलाकाराशयशायिनि मौक्तिके ।
मुहुर्मुहुरुदासीनामासीनामाश्रये श्रियम् ।।१।।

राधाविनोदकाव्यस्य प्रकाश: परितन्यते ।
सुधिया रामचन्द्रेण भास्वरेव सरोरुहम्(?)।।२।।

CLOSING भो भो कुशाग्रमतयः परकार्यदक्षा, बालोऽहमञ्जलिशतं करवै भवत्सु ।
यल्लोलुपेव गदितं वचनं मयेदं, चित्ते निधाय कलयन्तु कृपासमुद्राः ।।२४।।

COLOPHON इत्यागमिरामचन्द्रविरचितं राधाविनोदकाव्यं सटीकं समाप्तं ।

शुभमस्तु ।

Post-colophonic जयनगरे लिखितं नाथूरामेण ज्येष्ठस्याऽसिते पक्षे चतुर्दश्यां भौमवासरे० ।।
सम्वत् १८६५ ।। श्री राधाकृष्णाभ्यां नमः । श्रीराधिकायै नमः ।
प्रलमस्तु शुभं भूयात् ।।

## 6403. राधाविनोदकाव्यं सटीकम्

OPENING श्री गणेशाय नमः ।

पितृवचनमवश्यमेव पाल्य जगति जनानि शासितुं वनान्तं ।
गतमिति करुणारसार्द्रचित्त रघुपतिमेकमुपास्महे सदारम् ।।१।।

रगनाथांगजनुषा नारायणमनीषिणा ।
राधाविनोदकाव्यस्य व्याख्या विस्तारयिष्यते ।।२।।

राधाविनोदाख्यं काव्यं चिकीर्षुर्निर्विघ्नं प्रारिप्सितसमाप्तिकामो रामचन्द्रः कविः परमेश्वरकर्त्तृकस्वसरक्षणाशंसनरूपं मगलमाचरति, मालीन इति, सर्गबंधो महाकाव्यमुच्यते तस्य लक्षणं आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखमित्यादिप्राचीन-लिखनानुसारेण महाकाव्यत्वाभावेऽपि प्रस्य काव्यत्वलक्षणमेव लोकोत्तरवर्णना-निपुणकविकर्म काव्यमिति तल्लक्षणात् नूनमप्यत्र यः कश्चिदर्गः काव्य न दुष्यतीति प्राचीनोक्तेश्चेत्यनवद्य वनमालीनोऽस्मात् ग्रन्थकर्त्तृन् श्रोतृंश्च प्रवतु रक्षतु, आपादालबिनी माला वनमाला, तद्वा जगदीश्वरः कीदृशः मालीनः, मा लक्ष्मी सा आलीना दुष्टहरणसंभावनयाच्छन्नीभूय वर्त्तमाना यस्मिन्ततः स्वांत आलीनस्त-त्प्रणयितेन तन्मयत्वादित्यर्थः ।

CLOSING रामचन्द्रकविना कविनादः पुरुषोत्तमसुतेन सु तेन ।
राधिकाहृदयशोकदमासीद्राधिकाहृदयशोकदमारात् ।।१६ ।

....दये यस्य स तथा श्री...ष्ण इति यावत् तस्य यः शोकस्तदप्राप्तिनिबंधन दुःखं तत् द्यति खण्डयति तत्तादृशम् ।।१६।।

COLOPHON शुकदेवसमाख्यस्य पडितश्रीशिरोमणेः,
तनयस्य निदेशेन भट्टनारायणो बुधः ।
राधाविनोदकाव्यस्य व्याख्यानं स्वधिया व्यधात्
परोपकाररसिकाः शोधयन्तु तदादरात् ।
माधकृष्णद्वितीयायामक्षिनन्दरसेन्दुभिः
शाके गते विक्रमार्कराज्ञः काश्यामिदं कृतम् ।

## 6408. महाराजाधिराज-रामचन्द्र-यशःप्रबन्धः

OPENING ।। श्रीरामचन्द्राय नमः ।।

हेमग्रामप्रमत्तद्विरदहयघटाकंकणश्रेणिमुक्ता-
मालादोलादिकठाभरणपदमहादानलब्धप्रतिष्ठम् ।

न्यक्कृताक्ष्मच्चरित्रैर्नलभरतहरिश्चन्द्रकौन्तेयकीर्ति',
वीरश्रीरामचन्द्रं क्षितितिलकमिह स्तौति गोविन्दभट्टः ॥१॥

स्मेरे चंद्रावतसे हसति सकुतुके षण्मुखे सोपहास,
पश्यत्यालीकदबे गणसदसि शिशुक्रीडक प्रेक्षमाणे ।
मामेति व्याहरन्त्यास्तुहिनगिरभुवः कम्पमानाग्रपाणेः
कर्षन्ती कस्मात्केलीकिसलयमवतात्द्बालहेरंबशुण्डा ॥२॥

CLOSING

एणाक्षीचक्रचेतः सरसिजतरुणे शारदा काननाला (?)
चंत्रश्रीकंठचंद्रावलिगलितरसश्रेणिसश्रेयकीर्ते ॥
त्यागक्रीडारसालक्षितितलतिलकक्षत्रकल्याणराशे
दारिद्रारण्यकालानलकिरणनिधे रामचन्द्रेन्द्र जीयाः ॥७॥

जय जय चण्डिकानाथललाटरं(ग)स्थलीचडचित्रार्थिरश्वेतकीलक्षटा-
प्रविलसदसिदंडखण्डीकृतोदारतारातिकीलालधारा शतक्षालिताशा-
तटशिशिरकरकिरीटकर्णचलानद्धशेषाहिजाटच्छटारंगशृंगार गगा-
जलत्रिवसनगराजातिचयशःश्रेणिसंछादिताशेषधात्रीचद्रस्थिरानायक ॥८॥

। श्री । श्री । श्री । श्री । श्री ।

COLOPHON

इत्यकबरीयकालिदासकविकण्ठाभरणश्रीगोविन्दभट्टविरचितः श्रीमहाराजाधिराज-
रामचन्द्र यशःप्रबंधः समाप्तः ॥०॥ शुभं भवतु ॥

## 6410. रामचन्द्राह्निकम्

OPENING

गीतम् ।

उपलभितमुनिललनं यत्पदपद्मवरं
विधिहरिहरमानसरवरवासकरम् ।
दशनखशशिभिः सहित निखिलविकाशभरं
विश्वनाथहृदि निवसतु सतत मंजुतरम् ॥२॥

CLOSING

रे रे र र र रा रा र रा रा रौ रि रि रे र रम्
रा र रे र रि रे रो री रा रा रा रा र रा र रः ॥

COLOPHON

इति श्रीमहाराजाधिराजश्रीमहाराजाश्रीराजाबहादुरश्रीरामचन्द्रकृपापात्राधि-
कारिविश्वनाथसिंहजूदेवकृते रामचंद्राह्निके अष्टमो यामः ॥८॥ शुभमस्तु ॥

विश्वनाथसिंह (1833-1854 A.D.) was the son of जयसिंह देव of Rewah. A copy of the ms. is available at Alwar also.

## 6411. रामसन्देशः, पदार्थप्रकाशटीकासहितः

OPENING

श्रीवेदव्यासाय नमः ॥ श्रीविश्वपतिगुरुभ्यो नमः ॥
श्रीमंतं विट्ठलं नत्वा पूर्णबोधेष्टदैवतम् ।
रामसदेशव्याख्यानं दीपमुद्बोधयाम्यहम् ॥१॥

ॐ लक्ष्मीकांत: सकलभुवनाधीश्वर: सूर्यवंशे
प्रादुर्भूत: स्वगुरुवचसा त्यक्तसाम्राज्यलक्ष्मी: ।
रक्षोधीशापहृतमहिषिर्लक्ष्मणेनानुयात-
श्चक्रे वासं कुसुमिततरौ माल्यवद्भूधरेन्द्रे ॥१॥

लक्ष्मीकान्तेति—सकलानि समस्तानि भुवनानि भूतवर्त्तमानेष्यल्लोकास्तेषामधिक-श्चासौ ईश्वरश्चाधीश्वर: । निरुपचारेणेश्वर इत्यर्थ: ।

\+ + +

CLOSING

जानक्या: प्राणकांताय मन्मनोभीष्टदायिने
सीतालक्ष्मणसंयुक्त राम नाम नमोस्तुते ।

COLOPHON

इति श्रीराजराजेश्वरविरचितरामसंदेश: समाप्त: । एवं श्लोक १५१

श्रीरामचन्द्राय नम: ।

## 6412. रामार्यास्तव:, पदार्थदीपिकासहित:

OPENING

श्री गणेशाय नम: । श्री रामाय नम: ।

सीतालतासमासक्तं रामं कल्पमहीरुहम् ।
सफलं शीतलच्छायं श्रान्तविश्रान्तिदं भजे ॥१॥

श्रीमन्मुद्गलभट्टेन रामचन्द्रप्रभो: कृता ।
आर्यावृत्तस्तुतिस्तस्या व्याख्यानं क्रियते स्फुटम् ॥२॥

तत्र प्रथमं त्वयीति, हे रामभद्र, त्वयि सकलांतर्यामिनीश्वरे विमुखेऽननुकूले सति श्रवणादिभक्त्या नाराधितत्वात् इत्यर्थ: । किंलक्षणे त्वयि मखमुख्ये मखेषु यज्ञेषु मुख्ये प्रधाने 'यज्ञोऽहं वै विष्णुरिति' श्रुते: । ईज्यत्वेन कर्मफलदातृत्वेन वा मुख्यत्वं । एवंभूतं त्वां विहायान्यस्य कस्य देवतांतरस्य, मख्युर्भाव: सख्य तेन सख्येनानुकूल्येन जीवामि न जीवामि न जीविष्यामि । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति भविष्यवर्त्तमानसामीप्ये लट् । तव सख्येनैव जीवामीति द्वितीय-जीवामि-पदस्यार्थ: । न त्वहमेव जीवामि तु पुन: भवदर्पितवसनाशनमात्रजीवना: सर्वे प्राणिन: भवतीति शेष:, सर्वप्राणिनां त्वमेव योगक्षेमनिर्वाहक: ।

\+ + +

श्रीरामाय नम: ।

त्वयि विमुखे मखमुख्ये सख्येनान्यस्य कस्य जीवामि ।
जीवामीति भवदर्पितवसनाशनमात्रजीवना: सर्वे ॥१॥

CLOSING

श्रीधनुर्बाणधरं धारं दशाननविमर्द्दनम् ।
प्रफुल्लनयनाम्भोजं भजे दशरथात्मजम् ॥

पदार्थद्योतिनी चेयं दीपिकाऽर्यानुकूलिनी, काकंभट्टैः सुविभृता स्वसुखाप्त्यै मुदा स्फुटम।
मार्गशीर्षे सितेऽष्टम्यां सौम्येऽथ विकृतौ(?)शुभा, सिद्धेय दीपिकाऽर्याणां मुदं वहतु सर्वदा ॥

COLOPHON इति श्रीमहामुद्गलभट्टविरचितश्रीरामार्यास्तवपदार्थदीपिका सपूर्णा ।

श्री रामाय नमः शुभमस्तु ।

संवत् १८१८ छै ।

## 6415. वाग्भूषणशतकं सटीकम्

OPENING

॥ श्रीगणाधिपतये नमः ॥

नत्वा गुरुं राममभीष्टदेवं भक्तस्तयोः स्वेन कृतद्यु(?)तन्वीम् ।
काव्यस्य वाग्भूषणसंज्ञकस्य व्याख्यां करोति...रामचन्द्रः ॥१॥

॥ श्री गणेशाय नमः ॥

विप्राधिपारिरिपुसूनुविरोधितातो मित्रात्मजारिजनकारिसुतांकसंस्थः ।
पार्थाग्रजजनकाशनशत्रुपत्रज्येष्ठो ददातु कचमध्यमुखः शुभं वः ॥१॥

टीका—विप्रेति,विप्राधिपश्चन्द्रस्तस्यारिः राहुः तस्य रिपुः कृष्णस्तस्य सूनुः कामस्तं विरोद्धुं शीलं यस्य सः शिवस्तस्य तातः पुत्रः, तातस्तु पितृपुत्रयोरिति केशवः । मित्रः सूर्यस्तस्यात्मजः कर्णस्तदरिरर्जुनस्तस्य जनक इन्द्रः स अरिर्यस्य सः पर्वतस्तस्य सुता पार्वती तस्याः अंके उत्सगेऽङ्के स्थितः, पार्थोऽर्जुनस्तस्याग्रजो भीमसेनस्तस्याग्रजजनकः श्रेष्ठपिता वायुरशनं येषां ते सर्पास्तेषां शत्रुर्मयूरः सः पत्रं वाहनं यस्य सः स्कंदः, 'पत्रं वाहनपक्षयोरित्यमरः', तस्य ज्येष्ठः कचमध्यमुखः कचयोः कवर्गचवर्गयोर्मध्यस्य मुखं यस्य सः गजमुख इत्यर्थः वो युष्माकं शुभं ददातु ।

CLOSING

पाण्ड्ये पंडितमंडिते मलयजाश्रीताम्रपर्णीजलैः
युक्ते नीवृतिसंभवेन गुरुणा श्रीरामचन्द्रेण नः ।
इत्थं गूढपदं मतिप्रदमदो वाग्भूषणाख्य कृत
काव्य व्याक्रियतेऽत्र येन विदुषा तं वै नमामो वयम् ॥१०२॥

COLOPHON इति श्रीरामचद्रकृतं वाग्भूषणाख्य शतक समाप्तम् ।

## 6416. विज्ञप्तिपत्रम्

OPENING ॥ॐ०॥ श्रीजिनाय नमः । श्रीपंचपरमेष्ठी नमः ॥ श्री मणिभद्रवीराय नमः ।
स्वस्ति श्रीमज्जिनराजवाग्वादिनीसद्गुरुचरणकमलशरणीकृत्य ॥

स्वस्ति श्रीरमरासुरावलिचराधीशोतमार्गनंतं,
लोकालोकविलोकनैकरसिक धात्रादिदेवैः स्तुतम् ।
दृष्ट्वा यं चरणाश्रये स्थितिमती चक्रेश्वरीरूपभाक
जाता भक्तजनेष्टदा जयतु स श्रीनाभिजातो जिनः ॥१॥

CLOSING

गुलालविजय कविराय ।। त ए गल्ल मांहि शिरोमणि ।। लाभ ए सायपलरों दीपमु० जय एददं वं जगवणी ।।

COLOPHON

इति श्री श्री पुज्यराजगुण वर्णन विज्ञप्ती समाप्तिमगमत् ।। श्रीरस्तुतराम् ।

## 6417. विरहिणीप्रलापकाव्यम्

OPENING

सा वोऽव्याद्भारती भव्याननतामरसेन या ।
एकयासक्तिपरयानतामरसेनया ।।१।।

शारदा वरदा वास्तु वरदानविशारदा ।
शुभ्रिता शारदाभाभिः शारदाभ्रसमप्रभा ।।२।।

CLOSING

अकार्षीत्स इदं काव्यं केलिः सज्जनयोगतः ।
श्लाघ्यतां यस्य सत्काव्यकेलिः सज्जनयोगतः ।।५५।।

COLOPHON

इति केलिकृत विरहिणीप्रलापनाम काव्यं समाप्तम् ।

सम्वत् १६४० वर्षे वाहुल(?)सुदि सप्तमी घस्रे जगच्चक्षुर्भवे वारे महाजनमध्ये ।।

## 6448. नीतिशतकं, सुखबोधिकाटीकोपेतम्

OPENING

श्री गणेशाय नमः । वाग्वादिन्यै नमः ।।

परमात्मानमानम्य परमानन्दविग्रहम् ।
सज्ज्ञानप्राप्तये नृणां कुर्वे सन्नीतिवर्णनम् ।।१।।

श्रीमत्पुष्करव्यासस्य सुतः श्रीनाथसंज्ञकः ।
सन्नीतिशतकस्यास्य टीकां कुर्वे यथार्थतः ।।२।।

न चात्र रचना गुर्वी न चात्र कविचातुरी ।
यथार्थख्यायिनी टीका कृतेयं सुखबोधिनी ।।३।।

यामिति, अस्यार्थः प्रथमं फलप्रस्तावकथा सर्वले(ा)केषु प्रसिद्धा ततो लोकत एव ज्ञातव्या, इदानीं तस्य राज्ञो वैराग्योत्पत्यादिकारणमाह, या स्त्रिय सततं निरंतर चिन्तयामि स्मरामि सा स्त्री मयि विरक्ता उदासीना, उदासीनत्वे कारणमाह-साऽपि अन्यं जनं मदपर पुरुषमिच्छति स जनस्तत्काक्षितो जनः अन्यासक्तः वेश्यासक्तः इत्येवं भूतावसरे अस्मत्कृते.......'यां चिन्तयामि सततं मयि सा विरक्ता, साऽप्यन्यमिच्छति जनं स जनोऽन्यसक्तः', आदि......

CLOSING

गात्रं संकुचितं गतिविगलिता दंताश्च नाशं गताः,
दृष्टिर्भ्रम्यति रूपमेव ग्रसित वक्त्रं च लालायते ।
वाक्यं नैव शृणोति बांधवजनः पत्नी न शुश्रूयते
हा कष्टं जरयाभिभूतपुरुषः पुत्रैरवज्ञायते ।।१०७।।

चला लक्ष्मीश्चला: प्राणाश्चलं जीवितयौवनम् ।
चलाचले हि च संसारे धर्म एको हि निश्चल: ।।१०८।।

इति श्री व्यास श्रीनाथेन व्या०

चला: पुन: जीवितयौवनमपि जीवनतारुण्यमपि चलं, एवंभूते चलाचले संसारे एको धर्म: निश्चलो वर्तते ।।१०८।।

COLOPHON

श्रीमत्पुष्करव्यासस्य श्रीनाथाख्ये(ख्ये)न सूनुना,
वैराग्यशतकस्यास्य टीकेय सुखबोधिनी ।
निर्मिता स्वात्मबोधाय यथार्थाख्यायिनी मया
विद्वद्भिर्मत्सर त्यक्त्वा शोधनीया प्रयत्नतः ।।

सं० १८८३ मार्गशीर्ष बद ८ बुधवार ।

## 6451. वैराग्यशकं, सुबोधिनीटीकोपेतम्

OPENING

श्री गणेशाय नम: ।।

अथ वैराग्यशतं ।। योगिनां चेत:सद्मनि, चेत: मन एव सद्म, सद्मनि गृहे ज्ञानमेव प्रकर्षेण दीपो यस्य एवंभूतो हर: शंकर: विजयते सर्वोत्कर्षेण वर्त्तते, किं कुर्वन् सन् अन्त: अन्तरे स्फूर्जत् प्रस्फुरत् अपारमोहतिमिरस्य प्राग्भारमज्ञानलक्ष मुच्चाटयन् दूरीकुर्वन् श्रेयो दशाऽग्रे श्रेयसा पुण्याना दशा तस्या: अग्रे स्फुरन् प्रकटयन्, कथभूतो हर: चूडे मस्तकप्रदेशे उत्तासित: उत्तासीकृतचन्द्र: तस्य कलाया: चचत् परिस्फुरच्छिखा तया भासुर: देदीप्यमान., पुन: कथंभूत: लीलया दग्ध: विलोल: चचल: काम एव शलभ: पतगो येनासौ ।

शतखण्डं जर्जरतरं कौपीन, पुन: कथ कोऽपि तादृशो कौपीनवत् निरपेक्षो यदृच्छया प्राप्तभैक्ष्यं तदेवाशन तदैव निश्चित्य श्मशाने वने निद्रास्वातन्त्र्येण स्वेच्छया निरंकुशं अवार्यमाण विहरणं क्रीडनं शांतं मन: प्रशान्त योगमहोत्सवेऽपि स्थैर्यं एव यस्य वैराग्येण सामग्री तस्य त्रैलोक्यराज्येन किं ।।८५।।

COLOPHON

इति श्रीभर्त्तृहरिणा कृतं वैराग्यशतक समाप्तम् ।

संवत् १९१० वर्षे फाल्गुनमासे कृष्णपक्षे तिथौ सप्तम्यां ७ भौमवासरे श्री भावनगरमध्ये लिखितं व्यास हरजीवनदेवजी ।

## 6457. वैराग्यशतकम्

OPENING

।। श्रीगणेशाय नम: ।।
श्रीमद्गुरुचरणपंकजपरागपुजाय नम: ।

आर्यासूनुं समानं प्रणम्य मानं धरासुरै: प्रवरै:
आर्याबद्धा तयालं मुद्गलमालंबद कलये ।।१।।

CLOSING

ज्ञातुर्क्षतुर्दयालो:(?)सकलकविकुलालंकृते मुद्गलाद्यः
प्राभूत्तत्राबिकाया सुललितयमलग्रामधामा स सोम: ।
वैराग्यं प्राप्तुकाम: स्वमृदुमतिलताजातया जाड्यचञ्चुः
पंचाशत्पद्यपुष्पाद्विरकृत गिरिजाजानिपादाब्जपूजाम् ।।१०१।।

COLOPHON

इति श्रीमत्सकलकलोपनाम्ना सोमनाथेन विरचित वैराग्यशतकं सम्पूर्णम् ।
श्रावण शु० ११ भृगुवार सं० १६४२ ।

## 6459. व्रजैश्वर्यकादम्बिनीलीला सटीका

OPENING

सत्पुण्डरीकनयनं मेघाभ वैद्युताम्बरम् ।।
द्विभुज ज्ञानमुद्राढ्यं वनमालिनमीश्वरम् ।

इति च । सरसीरुहाक्ष्यं इति पद्मपादत्वादीनामुपलक्षणा नित्या: श्रियो यस्या:, श्रीरत्र दिव्यधामविभूतिपाषदहेतुका सार्वज्ञशरण्यत्वकारुणिकत्वमोचकत्वादिधर्महेतुका च शोभा दिव्यवेषरचना सर्वविधदिव्यवाक्संपत्तिर्लक्ष्मीश्च राधिकारूपा बोध्या । मेधा च विचित्रा । यथायथं त्रिवर्गसंपत्तिश्च । 'श्रीर्वेशरचना शोभा भारती सरलद्रुमे । लक्ष्मी त्रिवर्गसंपत्तौ वेशोपकरणे मताविति' विश्वमेदिनी च, श्रुतयश्च ।। तस्यामुक्ता: ।।

CLOSING

गोपगोपीगवावीतं सुरद्रुमतलाश्रयं ।
दिव्यालकरणोपेत रक्तपंकजमध्यगम् ।।

कालिंदीजलकल्लोलसंगिमारुतसेवितम् ।
चन्तयश्चेतसा कृष्णं मुक्तो भवति संसृतेः ।। इति ।।

ऐश्वर्यपूर्वं यमपूर्वपर्वा कादम्बिनीनन्दसुतावलम्बा ।

भूयाद्वियत्सिंधुशशांकसख्या सतां प्रिया तच्चरणाश्रितानाम् ।

CLOSING

इत्यैश्वर्यकादम्बिन्या श्रीगोकुलागमनाद्युत्तारलीलावर्णनं सप्तमी वृष्टि: । श्लोकपरिमितेत्यर्थ: । स्फुटमन्यत् ।।

श्रीसार्वभौमचरणाश्रयेणोपलब्धराधाविनोदपंकजसेवनश्री: ।
कादंबिनी व्यवृणुत प्रथितैश्च वृष्टिं वृंदावन:सकलसज्जनसंमदाय ।

Post-Colophonic

इति श्रीवृंदावनतर्कालिकारभट्टाचार्यविरचिता व्रजैश्वर्यकादंबिन्याष्टिप्पणी सुधासाराख्या पूर्तिमगात् । श्रीगोकुलानन्द: प्रीयताम् ।। श्रीरस्तु ।। श्री ।।

## 6460. शतश्लोकी-टीका

(चण्डी-स्तव:)

श्री महागणपतये नम: ।

OPENING

सि(शि)वराम: शिवो नत्वा शिवभक्तोपकारिकाम् ।
विवृणोति शतश्लोकीं सप्तशतीविभाजिकाम् ।।१।।

× × ×

श्री गणेशाय नमः ।

क्षणमिष्टमदस्त्वैव त्वन्नाम जपतो मम ।
शिवे कथमपर्णेति रूढिमारायते न ते ॥१॥
श्रीचण्डीस्तवमंत्रस्यविभाग: सप्तभिः शतैः ।
कात्यायनादितन्त्रेषु त्रिषु त्रेधा प्रकीर्तितः ॥२॥

CLOSING

चण्डीस्तवविभागांशो बालोप्युत्कंठितो यदि ।
स्यादनेन निबन्धेन शतश्लोकेन पंडितः ॥१०२॥
इति श्रीधरगंभीररायसोमसुतः सुतः ।
भारस्यथाञ्छतश्लोकी काशीस्थो वह्वृञ्चोऽग्निचित् ॥१०२॥
इति शतश्लोकी मूलम् ।

COLOPHON

शिवराम हनूमता ॥ इति श्रीसि (शि)वरामकृतशतश्लोकीटीका समाप्ता ।

सम्वत् १८२४ शाके १६८६ वैशाख शुक्ल ४ शनौ लिखितमिदं शैवोपनामक-भानुदेवात्मजनंदरामेण सप्तशतीमन्त्रविभागात्मक पुस्तक स्वार्थं परार्थं चेति ॥ शुभम् ॥

## 6464. शृङ्गारतिलकं, सटीकम्

OPENING

॥ श्री गणेशाय नमः ॥

अथ पंडितदुर्गादत्तकृत शृंगारतिलक भाषाटीका लिख्यते—

जिस सरोवर में दोनों भुजा हैं सोई मृणाल है, मुख हो कमल है, शोभासहित जल हो लीला है, श्रोणि अर्थात् कटि ही तीर्थशिला है, आँखें मछली हैं, बार ही सेवार हैं, स्तन ही चकवा चकईका जोड़ा है, ऐसा स्त्री के शरीर रूपी सरोवर को विधाता ने अच्छा बनाया है, कामबाण की अग्नि से भुजे भये लोग है तिन्हके नहाने को, मृणा......

बाहू द्वौ च मृणालमास्य कमल लावण्यलीलाजलं
श्रोणी तीर्थशिला च नेत्रशफरो धम्मिल्लशैवालकम् ।
कान्तायाः स्तनचक्रवाकयुगल कन्दर्पबाणानलै-
र्दग्धानामवगाहनाय विधिना रम्य सरो निर्मितम् ॥१॥

CLOSING

सत्यं ब्रवीषि मकरध्वजबाणपीडना-
दहं त्वदर्पितदृशा परिचिन्तयामि ।
दासोऽयं मे विघटितस्तवतुल्यरूपो,
सोऽयं भवेन्नहि भवेदिति मे वितर्कः । ३१॥

इति कालिदासकृतशृंगारतिलकः ।

परकीया नायका प्रति नायक का अनादर वाक्य-कमर पर पानी का घड़ा लिये हुए देखती है; सुहावनी अधखुली आँखों से मेरी तरफ मुंह करके । तेरे भाग्य लायक और

किसी पुरुष को तलाश कर ले। जिसकी कमर पर घड़ा होने का चट्टा पड़ रहा है ऐसी स्त्री को मैं नहीं भजता ।।३०।। नायका का उत्तर—हे कामबाण से पीड़ित पुरुष, तूं सच्च कहता है। पर मैं कुछ अभिलाष से नहीं देखती हूं। एक नौकर मेरा तेरे से मुंह का भाग गया है सो मैं तजबीजती हूं कि यह वही है कि और कोई है ।।३१।।

COLOPHON

इति श्री दुर्गादत्तपण्डितकृतशृंगारतिलकभाषाटीका समाप्ता ।।

## 6465. शृङ्गाररसमण्डनम्

OPENING

ॐ नमः श्रीकृष्णाय ।

मुदा चंद्रावल्या कुसुमशयनीयादिरचितु-
महो सप्रोक्ताः स्वप्रणयिसहचर्य्यः प्रमुदिताः ।
निकुंजेष्वन्योन्यं क्षतविविधतल्पेषु म(प)रमां (?)
कथां स्वस्वामिन्याः सपदि कथयन्ति प्रियतमां ।।

COLOPHON

अस्माकं तु जगत्त्रयेऽपि सुभगे नापेक्षितं किंचि-
दप्येतावत्परमंबुजाक्षि सतत संप्रार्थनीयं मुहुः ।
इत्थ शश्वदनिशपंकजदृशा नंदात्मजः सुन्दरः
सर्वस्वार्पणधीरया स रमतामस्मत्कृते सद्मनि ।।२०६।।

राधा-चन्द्रावली-गोपी-दासी-कथितमद्भुतं ।
सम्पूर्णंमभवत्कुंजे शृंगाररसमंडनम् ।।२१०।।

COLOPHON

इति श्रीमद्गोपीजनवल्लभैकतानश्रीविट्ठलेश्वरविरचितं शृंगाररसमंडन सम्पूर्णम् ।

## 6466. शृंगारलहरी

OPENING

श्रीगणेशाय नमः ।

पयोधेस्तल्पस्था कमलनिलया श्रीगुणनिधे-
स्त्वमुरस्थासीना सरसमनसि प्रेमरसिके ।
रमासीमानं ते तनुसुभगतायाः कथमपि
प्रसन्ना सा न स्यात् त्वमिव जगति त्वं विलससि ।।१।।

CLOSING

कवीनामन्येषां मदहरणदक्षाक्षणकरी
रसानन्दास्वादव्यसनरसिकानामविरतम् ।
कृता रामेणेय कविजनवरेणातिमहिमा-
रसैः पूर्णा नित्यं भुवि लसतु शृंगारलहरी ।।२१।।

COLOPHON

इति श्रीकविचक्रवर्यरामकविकृता शृंगारलहरी समाप्ता ।

संवत् १६४२ की भाद्रपद शुक्ला ६ गुरुवासरे लिखितं काशीनाथशर्मणा जयनगरे शुभं भवतु ।

## 6467. श्रृंगारलावण्यनिर्णयः

OPENING

श्री गणेशाय नमः ।

अप्सरोवाच—

पीनस्तनी चर्चितचन्दनाङ्गी विलोलनेत्रा तरुणी सुशीला ।
नालिंगिता प्रेमभरेण येन वृथा गतं तस्य नरस्य जीवनम् ॥१॥

शुक उवाच—

अचिन्त्यरूपो भगवान्निरञ्जनो, विश्वम्भरो ज्योतिमयश्चिदात्मा ।
नाराधितो येन हृदि क्षणेन, वृथा गतं (तस्य नरस्य जीवनम्) ॥२॥

CLOSING

रम्भा— सूक्ष्मोदरी हंसगतिः प्रमत्ता, सौन्दर्यसौभाग्यवती प्रसन्ना ।
निबोधयेन्नो रसिको सजीवो, वृ० (था गत तस्य नरस्य जीवनम्) ॥३१॥

शुकः— संसारमद्भावनभक्तिहीना चरित्रचारा हृदि निर्दया ये ।
विहाय योग कलिनान्तरेण वृ० (था गतं तस्य नरस्य जीवनम्) ॥३१॥

COLOPHON

इति श्रीशुकदेवरंभासंवादे शृङ्गारलावण्यनिर्णयः समाप्तं । शुभं ।

## 6468. शृङ्गारशतम्

OPENING

सिद्धिः ॥ श्री गणेशाय नमः ।

वातान्दोलनञ्चदञ्चलपटोन्मीलत्कुचप्रेक्षण-
प्राप्तानन्द......हसनव्यापादितव्रीडया ।
प्रस्थानच्युतनीविसंभ्रमकरव्यापारया पद्मया
लीलाकुंचित(लोच)नं···ह्रीणानन पातु वः ॥१॥

CLOSING

धत्ते हास्यं क्वचिदपि करोत्येव मानापनोदं
क्वापि क्वापि प्रणयकलहं क्वापि केलिं प्रियासु ॥
एवं वृत्तो ललितललनाभ्रूविलासानुविद्धः
कल्याणं नो वितरतु सदा हृष्टगोपीजनेशः ॥१०३॥

सालकारा शतश्लोकी मिश्रश्रीहर्षसूनुना ।
प्राकारि गोपिनाथेन विद्वज्जनमनोरमा ॥१०४॥

COLOPHON

इति श्रीमिश्रगोपीनाथकृतं शृंगारशतं समाप्तम् । शुभमस्तु

## 6469. शृंगारशतकम्

OPENING

॥ श्रीवाग्देवतायै नमः ॥

मलयपवनः क्षीवः कुंभी क्षपाकरमंडलं,
भुवनविदितं श्वेतं छत्रं पिकाः परिचारकाः ।

विकचतरवो यस्योत्तुंगाः पराः पटमंडपा-
स्त्रिभुवनमहाधीशः कामो विभाति जगत्त्रये ॥१॥

CLOSING

प्रावृट्कालनवीननीलजलदध्वान निशीथे मुहुः
श्रुत्वात्यंतभयप्रदं स्मरशरक्षीणा हि पांथांगना ।
शय्यायामवनौ निपत्य च पुनः शय्यातले भूतले
वारंवारमुदग्रकांतविरहज्वालाकुलातकति ॥१०१॥

COLOPHON इति श्रीगोस्वामिजगन्निवासात्मज-गोस्वामिजनार्दनभट्टकृत शृंगारशतकम् सम्पूर्णम् ॥

## 6470. शृंगारशतकम्

OPENING ॥ श्री गणेशाय नमः ॥

शब्दब्रह्ममयी चकास्ति मुरली यत्राद्भुता मोहिनी
यत्रास्ते शुकनारदादिनिहित प्रेमैव पीताम्बरम् ।
यत्राद्वैतसमाधिमग्नमनिशं निद्रामयी श्यामता
गोपीलोचनचुंबित नरहरेः क्षेमाय धामास्तु तत् ॥१॥

ये केचित् सुधियः सदुक्तिनिधयः सतुष्टवाग्देवता-
स्तेषां काव्यरसामृतानि वदने नित्यं वसत्येव हि ।
तेऽपि श्रोत्रपुटेन वाङ्मयरसं पातुं सतृष्णाः सदा
तस्मादेष रसाधिको नरहरेः काव्यश्रमः सार्थकः ॥२॥

CLOSING

आलि श्यामं व्योम स्फुटमृगमदः प्रच्छदपटः
परिस्तीर्णास्तारा सखि नरहरे ताः सुमनसः ।
अनल्पोयं तल्पः सरसरमणी किं च रजनी ।
कलानाथो नाथः कलय समयोऽयं रसमयः ॥३६ ।

भाले विधाय तिलकं तव कुंकुमेन
कंनेनि·········

Last f. missing.

## 6489. शृंगारशतकम्

OPENING ॥ इदानीं शृङ्गारशतकमारभ्यते ॥

चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभास्वरो
लीलादग्धविलोलकामशलभः श्रेयो दशाग्रे स्फुरन् ।
चित्तस्फूर्जदपारमोहतिमिरप्राग्भारमुच्छेदयन्
चेतः सद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः ॥

ज्ञानप्रदीपो हरः । श्रीमहादेवः । ज्ञानरूपप्रदीपः । ज्ञानं एव ज्ञानरूपदीपस्वरूपः ।

CLOSING

केशाः संयमिताः श्रुतेरपि परं पारंगते लोचने
अन्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणैः ।
मुक्तानां सततावबासरुचिरं वक्षोजकुंभद्वयम्
इत्थं तन्वि वपुः प्रशान्तमपि ते रागं करोत्येव नः ॥८८॥

इत्थंभूत प्रशान्तमपि तव शरीर रागं नो अस्माकं करोति तत्कथमिति ।

COLOPHON

इति (श्री)नाथव्यासविरचिता भर्तृभूपकृतश्रृंगारशतकार्थख्यायिनी सुखबोधिनी नाम टीका समाप्ता ॥२॥

## 6500. श्रीरंगकाव्यं, सटीकम्

OPENING

॥ श्रीवीरविट्ठलाय नमः ॥

यस्य प्रादुरभूद्विरिंचिमदनात्सार्वं विमानं विभो-
र्यच्चेक्ष्वाकुतपोबलेन विजितं तद्वंशजैः पूजितम् ।
पश्चाद्रावणहारिणा तदनुजे भृत्यर्पित तादृशे
रंगक्षेत्रपदे निरंतरगते श्रीरङ्गनाथं भजे ॥

श्रीरंगद्विहगे निमज्य शशिनस्तीर्थोदके पावने
धीरं गाढसमाधयः सुकृतिनो यस्यार्चनं कुर्वते ।
श्रीरंगे नवमेघकान्तिनिरता यस्याधिकं राजते,
श्रीरंगे तमनंतभोगशयनं वन्दे वसतं हरिम् ॥१॥

व्याख्या—श्रीरंगद्विहग इति । गाढसमाधयः । समाधियते: सम्यक् स्थाप्यते भगवति मनो यस्मिन् अवस्थाविशेषः । समाधिः । गाढा स्थिरा समाधिः । समाध्यवस्था येषां ते गाढसमाधयः । सुकृतमेषामस्तीति सुकृतिनः । पुण्यवतः पुरुषाः कर्तारः । 'पुण्यः श्रेयसि सुकृतं वृष' इत्यमरः । रंगद्विहगो । रंगतः क्रीडन्तः विहगाः हंसकोयष्ट्यादयः पक्षिणो यस्मिस्तत्तथोक्त, तस्मिन्पावने पवित्रे, शशिनः चद्रस्य । तीर्थं च तदुदकं च तीर्थोदकं तस्मिन् तीर्थोदके । तीर्थाभिमानी देवताभिमन्यमानोदक इत्यर्थः ।

+ + +

CLOSING

आप्लुत्य तीर्थसलिले मृगलांछनस्य, तेऽपि द्विजास्त्रिभुवनेश्वरमर्चयन्तः ।
आवर्त्यमानजपहोमविधिप्रबद्धाश्चकुर्निवासमिह पारदृशः श्रुतीनां ॥१२७॥

रंति गतो येन जगत्पवित्रे, तीर्थे शशांकस्य रथांगपाणिः ।
तेन प्रपेदे भुवनप्रकाश, रंगाभिधानं रमणीयमेतत् ॥१२८॥

COLOPHON

इति श्रीपूर्वसूरिविरचितं श्रीरंगकाव्यं समाप्तं । श्री श्री रामचन्द्राय नमः विरोधिकृत्नामसंवत्सरे दक्षिणायणे शरदृतौ आश्विन्मासे शु० पक्षे ५ इन्दुवासरेण युक्तः इह तिथौ वीरविट्ठलसन्निधौ सप्तविंशतिघटिकायां इदं ग्रंथं समाप्तम् ।

## 6501. ऋतुवर्णनशतकद्वयम्

OPENING

श्री गणेशाय नमः ।

निजार्धहृतशंकरं सकलदैत्यनाशकरम् ।
जगत्त्रितयशंकर स्वजनचित्तनिःशकरम् ।
ममाशु भजत पुरं धृतं वसुधरांतः पुरं ।
करोतु च निजं पुरं पशुपतेः सदान्तःपुरम् ॥१॥

श्रीसामराजगुरुनाथपद विभाव्य, श्रीसामराजपदपद्ममिलिन्दिकोऽहम् ।
श्रीकामराजपितृपत्परिसेवनेन, श्रीकामराजकृतुना रचनां करोमि ॥२॥

CLOSING

वक्षः कपाटपाटनपटोरपि दितेः सुतस्य मन्नखराः ।
लक्ष्मीकठिनकुचस्थलभुग्ना इति विस्मितो जयति नृहरिः ॥१००॥

COLOPHON

इति श्री द्वितीयं शतकं समाप्तम् ।

## 6503. सङ्गीतमाधवम्

OPENING

श्री हरदेवजी सहायः ।

अथ संगीत

सदानदे वृन्दावननिबिडकुंजे नवतडिद्-
घनज्योतिः पुज किमपि कलगुञ्जन्मधुकरे ।
नवोन्मीलत्कैशोरकललितलीलारसमयं,
प्रियं तस्मे जीयान्मधुरमधुरं धाम-युगलम् ॥१॥

नवप(ब)कशोरकान्तिभिः कृतवृन्दावनरूपहेमतां,
भज कामपि विश्वमोहिनीमधुरप्रेमरसाधिदेवताम् ॥२॥

CLOSING

अलकुर्यु रलंकारैः प्रेम्णा दधुर्मनः क्वचित् ।
कठे कुर्वन्तु रसिकाः कृति मुग्धामिमां मम ॥१३८॥

श्रीराधिकामाधवयोः पदाम्बुजे निर्माय यत्काव्यमिदं मयार्पितम् ।
तेनैव तौ प्रीतहृदौ कदापि मामत्यद्भुतौ दर्शयतो रहःकलाम् ॥१३९॥

COLOPHON

इति श्रीप्रेमरसाधिदेवतानुचरीभूता केनापि प्रकटीकृतं ।
इति श्रीप्रबोधानन्दसरस्वतीगीतम् ।
सं० १६२७ श्रावण ब० ७

## 6504. समयमातृका

OPENING

ॐ गजमुखाय नमः ।

ॐ अनंगबाललास्त्रेण जिता येन जगत्त्रयम् ।
विचित्रशक्तये तस्मै नमः कुसुमधन्वने ॥१॥

यस्मात्तुर्य (यस्या दुर्ग)रचोरववक्त्रकुहरे विश्वक्षये लक्ष्यते
क्षुब्धाविव(···)लोलशफरी कुत्रापि लोकत्रयी ।
तामज्ञातविशालकालकलनां तैस्तैः पुराणैरपि
प्रोक्तां देहिसमूहमोहनमयीं कालीं करालां नमः ॥२॥

इति समयमातृकायां कामुकार्थप्राप्तिरष्टमः समयः ।
सालंकारतया विभक्तिरुचिरच्छाया विशेषाश्रया
वक्रा(···········)रसवती मुग्धार्थलज्जापरा ।
(···········) नवनवा स्तात् प्रमोदार्पिता
वेश्या सत्कविभारती विहरति प्रौढा कलाशालिनी ।
सवत्सरे पंचविंशे प्रौढा कला शालिनी ।

फाल्गुनादि वासरे श्रीमतां भूतिरक्षायै रचितोऽय स्मृतोत्सवः ।
मद्रिच्छिद्रविनिद्ररौद्रफणिनामग्रास्तिकालाकुल मतास्तत्रवसभिदं(?)

+ + +

वीरस्यात्तदयाविधेयमनसः शीलव्रतालंकृते,
निस्त्रिंशः परदारकुञ्जरविधौ यस्यैककार्यः सुहृत् ।
तस्यानन्त महीपते विरजसः प्राप्याधि राज्योदये(?)
क्षेमेन्द्रेण सुभाषितं कृतमिद सत्पक्षरक्षाक्षमम् ।

इति श्रीसमयमातृका सम्पूर्णम् ।

## 6505· सरस्वतीविलासः

OPENING

श्रीमद्गणेशगीर्गुरुभ्यो नमः ।
यधानः सच्चक्रं मणिलसदुरः श्रीनिवसति-
र्बुधामदानंदाचरणविधृतानंदकमनाः ।
अनायासादासादितबलिजयः पातु सुदशा-
ऽवतारः सर्वोर्वीमिह स बलवंतक्षितिपतिः ॥१॥

CLOSING

युष्मत्कृते वीर चमत्कृतेस्मिन्ददासि लक्षं शतकेऽपिपद्यम् ।
तत्ते सदा भोजगतिप्रतीतिः प्रकाशतां चारु यशः सुधांशुः ॥१०५॥

इति श्रीमन्महामहागुप्तपरब्रह्म-परब्रह्मविद्याद्यखिलविद्यापारंगमचरणश्रीमद्दक्ष-पुत्रोपनामकश्रीपण्डिताधिराजश्रीशिवरामपण्डितनामकश्रीपरगुरुचरणपरिपूर्णकृपापूर्ण-तरीकृतेन केनचिदनेन रमणपतिनामकेन पडितेन भीमपुरोपनामकेन वटेश्वरक्षेत्र-वासिना विरचितं श्रीमन्महाराजाधिराजश्री-महाराजवृजेन्द्रश्रीबलवतसिंहबहादुरदेवानां प्रतापयशःपुष्पवर्षिकृपणशतकं सरस्वतीविलासः समाप्तः ।

सं० १६४२ मा०शु० कृ० ६ चन्द्रवार शुभमस्तु ।

लिपिकृता काशीनाथेन ।

## 6506. सामन्तविजयमहाकाव्यं, सटीकम्

OPENING

श्रीगणेशाय नमः। श्रीगुरुभ्यो नमः।

अजनीरजनाक्षगेपचर्यो(?)रजनीनाथकलाकृतावतंसः।
अजनीरजताचलाधिवासो भजनीयोऽवतु नो गजाधिनाथः ॥१॥

उत्संगसंस्थितकिशोरगजाननस्य, गंडस्थले मुकुरतुल्यतले लसन्ती।
बुध्वाञ्जनस्य निजनीलतरेक्षणानि, पाणाग्रकरेण गिरिजा परिमार्जयंती ॥२॥

CLOSING

कृपापात्रं शश्वन्निखिलविदुषां वेंकटपतेः
कविर्गोपालाख्यः सरसहृदयाह्लादिरचनः।
रसालंकारश्रीप्रविलसति सामंतविजये,
जगौ षष्ठे सर्गे सृजनकमसौ क्षेमनृपतिम् ॥

COLOPHON

इति श्रीमद्वेंकटेश्वरकृपासमासादितकवितालतालवालनिजवाणीविलासविशेष-विनोदितरसिकवसुमतीपालगोपालकृतौ सामंतविजयाख्ये महाकाव्ये षष्ठः सर्गः ॥६॥

Post-colophonic

इति श्रीमद्गोपालकृपालब्धविद्याविशेषनिखिलविद्वन्मनोहारि-साधुजनसेवा-वांछाकारि-वेंकटसूरिप्रणीतायां सामन्तविजयव्याख्यायां विबुधानंदिनीसमाख्यायां षष्ठः सर्गः ॥

श्री शके १७०३ प्लवनामसंवत्सरे भाद्रपदवद्य अमावास्यायां तिथौ इन्दुवासरे तद्दिने सामन्तविजयग्रंथः समाप्तिमगमत् ॥श्री राम।

## 6507. सुकृतसागर – पेथडप्रबंधः

OPENING

॥ श्री गौतमाय नमः ॥

कल्पद्रुम इवेष्टं वः कुर्वन्तु परमेष्ठिनः।
पुष्पपल्लवकिंजल्कच्छदषट्पदसुवराः ॥१॥

विद्याबीजानि जाने या नो मुखादातुमुद्यता
अक्षमालाछलाद्धत्ते पाणौ सा पातु भारती ॥२॥

श्रीसोमसुन्दराचार्यपट्टपूर्वाद्रिहेलयः,
तेजस्विनो जयति श्रीरत्नशेखरसूरयः ॥३॥

CLOSING

श्रीदेवेन्द्रमुनीन्द्रपट्टमुकुटं श्रीधर्मघोषो गुरु-
स्तत्पादाब्जपरागपावितशिखः पृथ्वीधरो धीसखः
तद्वंशांबरडंबरद्युतिपतिः श्रीझांझणश्चेत्यभू-
दुत्कृष्टो जगदग्रणी त्रिपुरुषी मूर्तेव देवत्रयी ॥३१॥

पूर्णः पार्वणसोमसुन्दरगुणस्यानन्दिरत्न त्रयी-
दीप्तश्रीगुरुधर्मघोषचरणद्वंद्वारविंदालिनः।
प्रौढावतित्रिरत्नमण्डनमणेः श्रीपेथडस्य श्रुति-
स्वादिष्टः सुकृताब्धिसागर इति ख्यातः प्रबंधोऽभवत् ॥३२॥

दृब्धः श्रीगुरुनंदिरत्नचरणांभोजालिना मेजुषा
विद्यामंडितपंडितप्रभुसुधानंदैरदोषी कृतः ।
तद्रातीतविनीतनंदिविजयप्रादुष्कृताद्यप्रति-
ग्रन्थः सद्भिरयं मरुत्परिमलन्यायेन विस्तार्यताम् ॥१३॥

COLOPHON

इति श्रीयुगोत्तमगुरुश्रीसोमसुन्दरसूरिपट्टालंकारश्रीरत्नशेखरसूरिविनेयपंडितप्रकांड-नंदिरत्नमणिचरणरेणु पं० रत्नमंडनगणिरचिते मंडनांके सुकृतसागरे श्रीपेथड़सुत-श्रीझांझणप्रबंधकथनो नामाष्टमस्तरंगः । संवत् १५११ वर्षे कृतोऽयं प्रबंधः दीपोत्सवे ।

## 6516. हरिविलासकाव्यम्

OPENING

·········ते तु सहसेत्यमरः । रचयति ब्रह्मणो रूपेण सृजति तद्वत् केनचित्कौतुकेन कुतूहलेन रुद्ररूपेण प्रशमयति संहारयति । कौतुकं च कुतूहलमित्यमरः । चण्डं च अत्यन्तं कोपन भयकर इति यावत्, मुंड शिरः, शिरो मुंडं च मस्तकमिति विश्वः, यस्य स राहुः स आदिर्येषा ते नानादनुजाः नानादैत्यास्तेषां दलनं संहारस्तत्र दक्ष क्षमं, अपरैर्ब्रह्मा-दिभिः अविदितं तत्प्रसिद्धं सर्वो विष्णुः, सर्वस्व मोहनीय रूपं शार्वो विष्णुरिति श्रुतेः । वो युष्मानव्यात् ।

CLOSING

अतसीकुसुमोपमेयकान्तिर्यमुनाकूलकदंबमूलवर्त्ती ।
नवगोपवधूविनोदशाली वनमाली वितनोतु मंगलानि ॥
नानागुणैरवनिमंडलमंडनस्य, श्रीसूर्यसूनुहरिभूमिभुजो नियोगात् ।
काव्य कृत हरिविलास इति प्रसिद्धं, लोलिम्बराजकविना कविनायकेन ॥६६॥

COLOPHON

इति श्रीमत्सूर्यपण्डितकुलालंकारश्रीहरिहरमहाराजाधिराजविरचिते हरिविलासाख्ये महाकाव्ये कंसवधो नाम पंचमः सर्गः ।

Post-Colophonic

शाके १६६७ क्रोधननाम संवत्सरे आषाढवध सप्तम्यां समाप्तम् । दामोदरेण लिखितम् ।

## 6517. हरिविलासकाव्यं, सुबोधिनीटीकायुक्त

OPENING

............जनेन रंजितानि मानसानि येषां ते वनेचराः किराताः, इह गोवर्द्धने अन्वहमनुदिनं रुचिरैः रमणीयैश्चित्रैर्नानाविधैर्विहगमंवीरिजैः कमलैश्चावृतानि वनान्युदकानि येषु तेषु वनेष्वरण्येषु विहारं क्रीड़ा विरचयंति कुर्वन्ति सुन्दरं रुचिरं चारु । स्वात हृन्मानस मनः, खगे विहगविहंगवतगमा इत्यमरः । वन सलिलकानने इति नानार्थः । द्रुतविलंबितछन्दः ।

CLOSING

अगत्येति, सोऽक्रूरः सूर्यतनयापयसो यमुनाजलतीरमागत्यावश्यक मध्याह्निकं सकलं कर्म सम्यक् समाप्य नंदविस्मययोः समूहेन समन्वितः·········· ·····मत्वा रथमारुरोह ॥ स्पष्टोऽर्थः ॥७१॥

नानागुणेति व्याख्यातपूर्वम् ॥७२॥

COLOPHON

इति श्रीमत्त्र्यंबकराजगुरुचरणप्रसादप्रेरितमंठकरोपाभिधेयपंडितभट्टरघुनाथ विरचितायां सुबोधिन्यां हरिविलासाख्यकाव्याख्यायां चतुर्थः सर्गः ॥

श्री शिवानन्दाय नमः । श्री भवान्यै नमः । समाप्तिमगमत्

## 6518. हृदयदूतम्

OPENING

॥ श्री गणेशाय नमः ॥

। ॐ ॥ कश्चित्कदापि जगतामधिपस्यदासो, निर्वेदमेत्य पुरि देवऋषेर्निषण्णः ।
दूत्ये विभोः पदसरोरुहदर्शनोत्को, युञ्जन्मनोगिरमवोचत योजितार्थाम् ॥१॥

हे चित्त दीनमवधारय मां नवीन-तारुण्य वैभवविलीनमतिप्रकाशम् ।
त्वत्तो न कश्चन परं चतुर हिताय, जाने तदेतदधुना विनिवेदयामि । २॥

CLOSING

शिक्षाविधिः पुनरय त्वयि मामकीनो, नागतुमर्हसि विहाय तदंघ्रिसेवाम् ।
य······नुरक्तमबुद्धय समा कदाचिदाकार्यनिजपदाबुजदर्शनाय ॥११४॥

इत्थं संदिश्य दासो हृदयमथ हरेः पादपद्मावलोक-
व्याख्याता शोकताख्याभिलषिपदवीलाभहेतोर्विसृज्य (?)
प्रायेणैतत्प्रतीक्षारसविवशमनकेवल तत्सपर्या-
पर्य्यायारंभपर्याकुल इह विषये नोन्मुखीभावमेति ॥११५॥

COLOPHON

इति श्रीहरिहरभट्टविरचित हृदयदूताख्य काव्यं समाप्तम् ।
संवत् १७३२ फाल्गुन सुदी पौर्णमासी भृगुवासरे ।

## 6519. अतन्द्रचन्द्रिकम्

OPENING

........त भारतीमर्मवेदिनो नटा ! आदिष्टोऽस्मि महाराजेन प्रत्यर्थिसार्थकीकृतपार्थविक्रमेण विकटरिपुभटकरटिघटाकरटतटपाटनप्रकटमुक्ताफलबीजभरिततुरगखुराकृष्टसमरभूमिक्षेत्रप्ररूढमशपादपच्छायाशिशिरीकृतसंसारेण सुरतकेलिकेलिकलहत्रुटघद्द्विजवधूवक्षोजमण्डनहारगलितमौक्तिकबीजसमुद्भूतकीर्तिलतालंबनपादपेन फतेसाहदेवेन यदेतान्मच्चरणनखधवलीकृतकिरीटकोटीनाधिगगाद्वारम्प्रचरणपरिचरणाय मिलितान्नरपतीनभिनवेन सकलरसशवलन प्रकरणेनानुरजयितुमर्हसीति तत्सज्जीभवतो भरतस्य भारतीमनुसरतः स्वीय-स्वीय-वर्णिक-परिग्रहेण ।

## 6522. आनन्दरघुनन्दनं नाटकम्

OPENING

अपिच ॥ कल्याणं कलयंतु शंकरधनुर्मौर्वी समाकर्षणा
काठिन्यः प्रतिभाति पाणिलसिता·········जांगुलिः श्रेणयः (?)
शोणांऽभोरुहमध्यसंपुटमिलत्संवर्तिकासभ्रमाः
यासूद्भुंगविभा विभाति महिजाजानेः कटाक्षच्छटाः ॥२।

देवेन्द्रवद्यविलसच्चरणारविन्दमानन्दसान्द्रमुदितेन्दिरमानमामः ।
यस्य प्रसादरजसा सहसा शिलाऽपि, बाला बभूव विमला कमलायताक्षी ॥३॥

CLOSING

श्रीरघुनन्दनः— याचस्व, याचस्व ।

सूत्रधारः—चूडाचुंबदंजलिपंकज प्रणम्य,

चित्तं निर्मलतां प्रयातु निखिला नश्यंतु कामादयः
पुण्यं पाणितलावलंबमिह नः कुर्यां विवेकप्रदम् ।
त्वत्पादाब्जमिलन्मिलिंदपदवी स्याद्देव देव प्रभो
प्रेमाप्नोतु तवोत्तमं··· ··नर श्रीविश्वनाथः कृती ।

अपिच— यावत्कीर्तिस्त्वदीया चलति कुवलये तावदास्तां रसौघ-
प्राकट्यं नाटकं श्रीरघुवरचरितं नंददानदमूम्ने ॥
स स्यात्सौभाग्यशाली विरतिवरगतिर्यः पठेत्पाठयेद्वा
त्वद्रूप विश्वनाथः कलयतु हृदये दीयतां सद्वरोऽयम् ॥

श्रीरघुनन्दनः— तथास्तु ।

सूत्रधारः प्रणम्य निष्क्रान्तः

श्रीरघुनन्दनः—आगच्छत, गृहान् गच्छामः ।।

इति निष्क्रान्ताः सर्वे । सम्पूर्णं ।

COLOPHON

इति श्रीमहाराजकुमारश्रीबाबूसाहेबविश्वनाथसिंहजूदेवनिर्मितमानन्दरघुनंदनं नाम नाटकं सम्पूर्णम् ।

## 6524. कन्दर्पदर्पणो भाणः

OPENING

कन्दर्पदर्पणभाणप्रारभः—

यस्य प्राणसुखाः शराः श्रुतिसुखा मौर्वी रसज्ञा प्रियं,
कोदण्ड नयनोत्सवः प्रियसखः स्पर्शाभिनद्यो रसः ।
चेतः प्रीतिकरी जनिस्त्रिजगती हृद्य च बाह्वोर्बलं
सोऽयं पञ्चशरस्तनोतु भवतां शृंगारमव्याहतम् ।

अपिच- नृत्यत्कर्णविभूषणं निरवधि स्वेद विधुर्नालकं
प्रक्रान्तध्वनिमेखल प्रविचलद्भूषं प्रकम्पि स्तनम् ।
व्यक्ताव्यक्तवच क्रम विवलितापाग विकासि स्मितं
मृष्टामृष्टविशेषकं मृगदृशा वीरायितं पातु वः ।।२।।

CLOSING

मर्यादाचरणं जनस्य महतो वर्णक्रमे वर्त्ततां,
सस्यैः पूर्णरसादिभिः समधिका सर्वसह जायताम् ।
आदेशो भुवनत्रये रतिपतेरव्याहतो वर्धतां
चित्ते पुण्यवतां शिवस्य चरणद्वन्द्वं परिस्पन्दताम् ।।६३।।

इति निष्क्रांतः ।

COLOPHON

इति अभिनवकालिदाससूनोः श्रीकण(ण्ठ)स्य कृतिः कन्दर्पदर्पणो नाम भाणः सम्पूर्णः ।

## 6525. कर्पूरमञ्जरीसट्टक-टीका

OPENING

श्री गणेशाय नमः ।

इह हि ग्रंथारंभे समुचितेष्टदेवतास्मरणरूपं शिष्टाचारपरिपालानार्थं ग्रंथोद्देशज्ञापनार्थं चेदमाह ।

सरस्वत्या १ भद्रं भवतु ८ कवय १ व्यासादयो वाल्मीकिमुख्यानंदन्तु ।

अत्रानुक्तोऽपि चकारो ज्ञेयः । तथा अन्येषामपि परमद्र्थं वरा उत्कृष्टा वाणी प्रवर्त्ततां । किलक्षणा गौः छइल्लप्रिया......ल्ला देशीयभाषया बिदग्धा तेषां प्रिया

+ + +

CLOSING

.........राज्ञी—आर्यपुत्र, एष उपाध्याय आर्य कपिञ्जलस्तिष्ठति । ततः स्थापनं ।

विदू०–भो वयस्य, उत्तरीये ग्रंथि दास्यामि । परिणयतु महाराजः कर्पूरमजरीं ।
(इति हस्ते हस्तं ग्राहयति कर्पूरमञ्जर्या-घनसारमजरीत्यपर नामान्तर)

राजा–(करमादाय) एकेऽपि तत्र पुसमुग्ध (?)केतकी कुसुमगन्ध दलावलीषु ।
स्पर्शाविव पुलकाकुरितांकुरास्ते, कर्पूरमजरि ममैव शरीरतुल्या ॥

विदू०–भो वयस्य, भ्रमर्यो दीयता । द्रुतभुजि लाजाः क्षिप्यन्तां ।
भ्रमर्या नाट नाटयति नायिका । धूमेन व्याकुलमुखी राज्ञी । सपरिकरा निष्क्राता ।
सर्वेषां प्रत्यक्षं परिणीता कर्पूरमंजरी । इति निष्क्रांताः सर्वे ।

कुत्रायं कविराजशेखर इति क्वासौ वसंतोत्सवो,
येनोढा स नृपः क्व च प्रियतमा कर्पूरमञ्जर्यसौ ।।
योगीन्द्रः क्व च नृत्यवेशरचना कालः क्व चासौ द्विजः
शुद्धप्राकृतभारतीपथगता कीर्त्तिः स्थिरा शाश्वती ॥

ननु संस्कृतवचताऽधुना कविपीताबरचारुसरस्वती ।
इति जल्पति रत्नमंजरी रचिता सा घनसारमंजरी ।

COLOPHON

इति कर्पूरमजरीसाटके चतुर्थजवनिकांतरम् । शुभमस्तु

## 6527. कुमारविजयनाटकप्रारंभः

श्रीगणेशाय नमः ।

OPENING

मद्या हरन् हरकपर्दजुषोऽम्बुजानि,
ह्रस्वानिमानरि सह प्रमथैर्हसत्या ।
हृद्या चकास्तु शिशुकेलिधरः स कोऽपि
विद्यावलीकुतुकनाटकसूत्रधारः ॥१॥

नान्द्यन्ते सूत्रधारः । (नेपथ्याभिमुखमवलोक्य) मारिषेतस्तावत् ।
(प्रविश्य पारिपार्श्वकः)
पारि०— भाव म म्हि ॥
सूत्र०— मारिष, परिषदा सादरमाहूय नियुक्तोस्मि ।
परि०— कह विम्र
सूत्र०— सभाजनसमुचितं किमपि रूपकं निरूप्यतामिति ।

\+ \+ \+

CLOSING देवः– सोल्लासं– देवि किमतः परमपि प्रियमस्ति, तथापीदमस्तु—
भरतवाक्यं—

आपद्यासनमा पतंगमखिलाः सत्वा लमता सुखं,
विद्वांसोऽपि भवन्तु सत्कविगिरा गुफे गिरग्राहिणः ।
वाङ्मयं भुवि जायतामपि सदा षट्कर्म नित्यादरं,
साधूनामभिमानसारणिपर ज्योतिः परिस्पन्दताम् ।
इति निष्क्रान्ताः सर्वे ।

COLOPHON पंचमोङ्कः । सम्पूर्णमिदं कुमारविजयाभिधानं नाटकम् ।

## 6528. कृष्णभक्तिचन्द्रिका-नाम नाटकम्

OPENING ॥ श्री गणेशाय नमः ॥

कोऽपि स गोपकुमारः स्फुरति समाजे व्रजस्त्रीणाम् ।
नवजलधर इव मध्येतडितां परितः स्फुरन्तीनाम् ॥१॥

अपि च— प्रत्येकं तनुरोमसुश्रितजगज्जालाय गोष्ठेशितु-
र्बालाय प्रविनाशितातिविपुलव्यालाय वृन्दावने ।
गोपालाय महीभरक्षितिभृतां कालाय वक्ष स्फुरन्-
मालाय स्फुटपीततावदरुणज्वालाय नित्यं नमः ॥२॥

CLOSING श्रीकृष्णभक्तः—एवं तर्ह्यागच्छावः श्रीमथुरायामाराधयावः श्रीभगवंतमिति
निःक्रान्तौ ॥

कल्पलतेव फलानां ज्योत्स्नेव भक्तचित्तकुमुदानां
खनिरिव मुक्तिमणीनां हरिभक्तिरियं समुल्लसति ॥१॥

श्रीकृष्णं समुपैति कोऽपि विपुलक्लेशैस्तपस्यादिभिः
सद्यः सौख्यघनेन कश्चन पुनः ससेवनेनैति तम् ।
पद्भ्यामध्वनि कोऽपि याति निरुपायमद्भ्यामतीवातपे,
कश्चिन्मत्तमतंगजोपरि गजाच्छत्रेण चालकृतः ॥२॥

क्लेशाग्निनाशयति केशव एव पुंसां, सतोषमेव च स सन्ततमातनोति ।
शीलं स्थिरं भगवतः सहजं विबुध्य, जाता वयं जगति सांप्रतमस्य भृत्याः ॥

**COLOPHON** इति श्रीमदापदेवसूनुना अनंतदेवन कृतं श्रीकृष्णभक्तिचन्द्रिकाभिधानं नाम नाटकं समाप्तम् । शुभस्तु संवत १७५७ ज्येष्ठ शु॰ १० ।

## 6531. दुर्वाससः पराजयं नाम नाटकम्

**OPENING**

।। श्री गणेशाय नमः ।। ॐ नमः··· ··

यत्सत्वेन जगत्समस्तमभवत् यत्तेजसा भासित,
यच्चैतन्यकणाः सचेतनमिदं यद्योगतो जगमाः ।
यस्योत्पत्तिविपत्तिपालनबलद्वित्वानुमायं भजे
शुद्ध' सत्वगुणेन बिम्बितमहं कृष्णाभिधेय महः ।।१।।

**CLOSING**

तर्हि गरुडमाह्वयामि । ततः प्रविशति गरुडः ।
पक्षोत्थश्वसनं रचालितगिरि सक्षोभिताम्भोनिधि
वज्राघातव्रणो मनोधिकजवः सामानि गायन् गतेः ।।
देवध्यानविशेषभूषिततनु चंचूकृताशीविषः
चचद्वर्णसुवर्णपत्रविततिः प्रायात्प्रभु पत्रिराट् ।।१।।

\+ \+ \+

तापैः पापधियस्तपन्तु तरुणैः शान्ता भवन्तु द्विजाः,
पृथ्वीयं पृथुमस्यशालिसलिलः राजवन्तो जायताम् ।
यज्ञैर्यज्ञपतिं यजन्तु मनुजाः नास्तामकाले मृतिः
कामे वर्षतु वारिदः शुभदृशः संतु ग्रहाः सर्वदा ।।१।।

अथ मुनिभिरनुज्ञाता निष्क्रान्ताः सर्वे ।

**COLOPHON** इति श्रीकविकाशिनाथविरचिते दुर्वाससः पराजयनाटके पंचमोऽकः ।। समाप्तोऽयं नाटकग्रंथः ।। लिपिकृतोऽयं व्यासहरिशर्मणा ।।

## 6535. धर्मविजयनाटकम्

**OPENING** (on f. 11)

।। ततः प्रविशति व्यभिचारः ।

व्यभिचारः—आज्ञाप्तोस्म्यधर्मेण । यथा—

'परस्परं सह प्रीत्या गार्हस्थ्यमनुभूयतां' ।

इति च भवतोऽवलोक्य कुतरुणी तरुणैरपि स्वेच्छाविहारिभिर्भवितव्यमिति, तदिदानी प्राप्तं मया नंदनवनं सपादिताज्ञा राज्ञो विधेयभावं नातश्चातपत्रतः सर्वोपि जनः ।।

यतः–

काचित्कान्तं परमभिसरत्यात्मना वित्तकामा,
दूती काचित्तृपति विविधैश्छद्मभिः संप्रलोभ्य ।

काचित्कल्तु व्रजति सकले जारसंगाद्वय: स्वं
काचिद् वंध्या प्रतिभवमटनाकुला पुत्रहेतो: ॥१॥

CLOSING

.........माषी: यथा–

विष्णुर्व्यापकतां ददातु जगतामैश्वर्यमाशागिरे-
स्तेजस्तीव्रकरस्तनोतु विपुल शक्तिश्च शक्ति पराम् ।
विघ्नं विघ्नहरो हरत्वविरत राकेशखण्डोल्लसद्-
भाले भक्तिरचचलास्तु भवतो देवे च लक्ष्मीपतौ ॥६२॥

राजा— पुन: काशीदर्शनकामुकोऽस्मि यदि चेदभिमत भवतीना ।
विद्या– तदेहि वत्स, सहैव तावत् साधयाम: । इति नाटयेन निष्क्रांता: सर्वे ।

COLOPHON

इति श्रीमच्छ्रुमभूदेवविरचिते धर्मविजयनाम्नि नाटके नायकनन्दनो नाम पंचमोऽङ्कः ।

समाप्तमेतत् । श्रीरस्तु शुभं भवतु ।

## 6537. प्रद्युम्नविजयम्

OPENING

श्रीगणेशाय नम: ।

गोपीगोपतिगोपगोभिरखिल संगोपयन् गोकुलं,
गोत्रोन्मूलितगोत्रभिन्मदलसद्गोत्रासु गाश्चारयन् ।
त्व साक्षाद्यदगोचरोऽपि जगतां जातो यथा गोचर-
स्तन्मे मानसगोचरो भव यतस्त्वय्येव गावोर्पिता: ॥१॥

सूक्ष्मात्सूक्ष्मतरा कला जनयितु: स्थानत्रयस्पर्शना-
ज्जाता नादमयी तुरीयमसकृल्लब्ध्वा समुत्सर्पती ।
संसृष्टि किल बोध्यबोधकभवैर्भावैरलङ्कुर्वती,
धातु:सद्मविहारिणी विजयते वाग्देवता तारिणी ॥२॥

CLOSING

.........तत: प्रतीहारिप्रेषितया कयाचिद्भर्तृदारिकाज्ञ मासाद्यागतया सहैवास्माभि: प्रचलित तत: कक्षासप्तान्तरमुल्लङ्घ्यांगणभुवं हरितनीलाश्मद्युतिच्छुरितां कच्छ भुवमिवोपगता:, तत: इन्द्रनीलमणिभवनस्था काचिद्दीपशिखेव गरुन्मणिगृहस्था काचित्कनकलतेव शोणमणिसदने काचित्सांध्यघनपक्तावचिरप्रभेव वज्रमयागारे काचिद्धिमालयशिखरान्तर्दावाग्निज्वालेव अनेकमणिगणगणितगुणग्रामाभिरामताकृततम:-कदने तन्मध्यसदने शरच्चंद्रप्रभेव प्रभावती प्रभाती...

(Incomplete)

## 6539. प्रबोधचन्द्रोदयनाटकं सटीकम्

OPENING on f 2

···चेत्कथमनर्थनिर्वृत्तिरित्याशंक्य स दृष्टांतमाह—यत्तत्वं यस्य त्रैलोक्यस्य तत्त्वकं स्वरूपं विदुषां ज्ञानिनां पुनर्निमीलति नश्यति भात्मस्वरूपरिक्त न भवति किन्तु ब्रह्म-

स्वरूपेण तिष्ठतीत्यर्थः तत्र दृष्टांतः अभोगिभोगोपमं स्रजि मालायामुत्पन्नो यो भोगिभोगः सर्पदेहस्तेनोपमेयं, तथाचायमर्थः मालातत्त्वसाक्षात्कारात्तद्भ्रमसर्पदेहो न भवति किन्तु तत्स्वरूपेणावतिष्ठते एव ब्रह्माद्वैतसाक्षात्कारात्स्वरूपातिरिक्तरूपेण प्रपंचो न तिष्ठतीति एव च सति अज्ञाननिवृत्तिप्रयोजनं प्रयोजनकामोऽधिकारी प्रतिपाद्यप्रतिपादकभावः संबंध ऐक्यमतिथेयमित्यादि प्रदर्शितम् ॥१॥

अपिच— अन्तर्नाडीनियमितमरुल्लघितब्रह्मरंध्रं,
स्वांते शांतिप्रणयिनि समुन्मीलदानन्दसान्द्रम् ।
प्रत्यग्ज्योतिर्जयति यमिनः स्पष्टलालाटनेत्र-
व्याजव्यक्तीकृतमिव जगद्व्यापि चन्द्रार्धमौलेः ॥२॥

CLOSING तथापीदमस्तु,

पर्जन्योऽस्मिन् जगति महतीं वृष्टिमिष्टां विधत्तां,
राजानः क्ष्मां गलितविविधोपद्रवाः पालयन्तु ।
तत्वोन्मेषोपहततमसस्त्वत्प्रसादान्महान्तः
संसाराब्धिं विषयममतातकपकं तरन्तु ।

इति निःष्क्रांताः सर्वे ।

COLOPHON इतिप्रबोधचन्द्रोदयाख्यनाटके जीवन्मुक्तिनिरूपणं नाम षष्ठोंऽकः । समाप्तमिदं श्रीकृष्णमिश्रविनिर्मित प्रबोधचन्द्रोदयनाम नाटकम् । शान्तिः ३

......तस्मादुपहतं विनाशितं तमः अज्ञानं येषां ते विष्णुभक्तेः प्रसादात् सर्वं प्राप्यते इति भावः । अंकसमाप्ति द्योतयति । इतिनिष्क्रांताः सर्वे । इति अंकसमाप्तौ सर्वेषां निःक्रमणमित्यर्थः ।

इति श्रीमद्भट्टविनायकात्मजदीक्षितरामदासविरचिते
प्रकाशप्राकृतं संस्कृतमत्र किंचिद् व्याख्याय तात्पर्यमवगि किंचित् ।

विक्रमाद् द्वेयुग्मांकचन्द्रसंमितवत्सरे ।
मार्गशुक्ले दशम्यां हि भृगौ पूर्तिमगादिदम् ।

## 6540. प्रभावली नाटिका

OPENING श्रीगणेशाय नमः ।

पूर्वं यस्य कराः प्रयांति गुणतां प्रेमप्रवालस्रजः,
पश्चात्कञ्चुकतां महाबलकुचप्रांते महीसुभ्रुवः ।
उद्यच्चारुवितानतामथ महाराजस्य चेतो ध्रुवः
पूर्वाशारमणी विलासमुकुरः कोऽयं समुज्जृम्भते ॥१॥

नान्द्यन्ते सूत्रधारः— अलमतिविस्तरेण ॥ परिषदं निरूप्य । अद्याहं तर्कयामि बदेते दिक्पालस्पर्द्धा समृद्धिहराः सदस्यनृपाः हरजीवनमिश्रेण श्रीमहाराजरामसिंहस्य

स्वातप्रोत्साहमार्थं श्रृंगाररसपरिपूर्णा महाप्रेम्णा प्रकाशिता या प्रभावली नाम नाटिका तस्या अभिनयाय समाज्ञापयिष्यंतीति ।

CLOSING

सकलनिधिमवाप्य प्रोद्यतश्चन्द्र एषो
'जय जय जय शब्दं व्याहरंतु द्विजेन्द्राः ।
परिणममुखरागा लक्ष्यते वासवाशा
तरणिकिरणतापं तावदुत्सारयन्ती ॥

तथापीदमस्तु भरतवाक्यं—

सुवर्णवाङ्मयार्थरसप्रकाशा सुपूरिताशा किरणप्रबंधैः ।
मनोरथप्राप्तिकरा कवीनां प्रभावली मंगलमातनोतु ॥
इति निष्क्रान्ताः सर्वे ।
चतुर्थोङ्कः ।

COLOPHON

इति श्रीपादचात्स्यगौड़ान्वयभूषणश्रीवेदवेदान्तसारहारविराजमानहृदयश्रीवैद्यनाथ-मिश्रतत्पुत्रसकलशास्त्रार्थविवेचकश्रीलालमिश्रात्मजहरजीवनमिश्रविरचिता प्रभावली नाम नाटिका सपूर्णा । श्रीरस्तु,

Post-colophonic

संवत् १७५२ श्रावण मासे कृष्णपक्षे द्वितीयायां बुधवासरे लिखितम् ।

## 6542. मदनसंजीवनो भाणः

OPENING

भरायास्तु स गेहेषु यद्वाहो गूढतस्करः ।
यत्र नायकनामापि लालसीति विवर्णवित् ॥१॥

अपिच—

क्षेमायास्तु दिगम्बरस्य च वपुः सौन्दर्यलेशः पुरा
यन्दृष्ट्वा किल दारुकावनमुनिस्त्रैण पुरोवर्त्तत ।
तूर्यत्कंचुकमस्तकांचिविगलन्नीवीप्रहृष्यन्मुख
सर्वाङ्गेण निरूढरोमविततिस्विन्नांगमुत्कम्पनम् ॥२॥

CLOSING

विचिन्त्य— अलमेतेन प्रिये श्रूयतामवधानतः
त्वं गृह त्वं धनं मित्र त्वं बंधुस्त्वमीक्षणम् ।
त्वं कलत्र शरीरं त्वं त्वं मनस्त्वं ममासवः ॥१०२॥
पुंसो बाहुयुगस्य संभवफलं यस्यां कपालीदृशोः,
आलोको वदनस्य''' ——'''स्वादोनुसारः पदोः ।
पाण्योरुरुनखक्षतार्पणमुपालंभः श्रुतः कर्णयो
मूर्ध्नि पादनतानि मुग्धतरुणीलोकः समाजीर्यतु ॥१०३॥

COLOPHON

पुनः समाधाय—इति निष्क्रांताः ।
सम्पूर्णो मदनसञ्जीवनो भाणः ॥

## 6544. मुकुन्दानन्दमिश्रभाणः

OPENING श्रीगणेशाय नमः ।। श्रीमुकुन्दानन्दभाणः

वंदे वंदारुमंदारमिन्दुभूषणनंदनं ।
अमंदानंदसंदोहबंधुरं सिन्धुराननम् ।।१।।

कठालिंगनमंगलं घनकुचाभोगोपभोगोत्सव,
श्रोणीसंगमसौभग च सततं मत्प्रेयसीनां पुनः ।
प्राप्तु कोऽयमितीर्ष्ययेव यमुनाकूले बलाद्यः स्वयं,
गोपीनामहरद्दुकूलनिचयं कृष्णः स पुष्णातु वः ।।

CLOSING मुकुन्दानन्दनाम्ना तु भाणेनानेन तोषितः ।
कमलाकमनः कामं कल्लोलयतु मंगलम् ।।२४६।।

कृति लसदलंकृति रसविदो बुधा ये ।
मम प्रसन्नहृदया दयाजलधयो बहूकुर्वते ।
तदीयपदपद्मयोरयमयं प्रणामाञ्जलिः,
सरोजमुकुलाकृतिः शिरसि सतत न्यस्यते ।।२५०।।

COLOPHON इति श्रीमत्काशीपतिकविराजराजविरचितो मुकुन्दानन्दनाममिश्रभाणः संपूर्णः ।

Post-colophonic शाके १७६८ धान्यब्दे ज्ये० कृ० १० मंदवासरे पुस्तकं समाप्तिमगमत् ।

## 6554. रतिमन्मथनाटकम्

OPENING ।। श्रीरां वदे ।। ॐ नमः ।। श्रीमदच्युतचरणारविन्दाय ।।

साकूताः शशिशेखरे सुरसरित्याविष्कृतानादराः,
स्मेरा भृंगिरिटावनन्यशरणे दीने दयामेदुराः ।
वात्सल्यप्रचुराः प्रसूनविशिखे रत्यां प्रसादोत्तराः,
कल्याणस्मितरंगयंतु जगता मातुः कटाक्षाङ्कुराः ।।१।।

नान्द्यन्ते सूत्रधारः—नेपथ्याभिमुखमवलोक्य–आर्ये संनिधो हि मे तावत् ।

प्रविश्य नटी.........देवि-वत्सात्रैव मन्मदिरसन्निहिता श्रृङ्गारपरिखामधिष्ठाय स्वनियोगमशून्यं कुरु ।

मन्मथः—(सानन्दबाष्पं) अम्ब श्रेयसामतिभूमि गमितोऽस्मि ।
देविः(देवि)—वत्स, किं ते भूयः प्रियमादिशामि ।
मन्मथ—सप्रणामं, अंब, किमितोऽपि प्रियतरमस्ति मे ।

CLOSING कालाक्षोऽपि वशीकृतो ननु मया मातर्यदेभिः शरै-
र्मायावी स च शंबरो यदवशान्मध्ये रणं शायितः ।
एका प्रार्थयता रतिं यदपरा लब्धा च मायावती
त्वत्सान्निध्यजुषोऽद्य तन्मम किमाशास्यांतरं वर्तते ।।२८।।

तथापीदमस्तु भरतवाक्यं—

मोदंतां हृतशात्रवाधिचर तरं धात्रीश्वरा धार्मिकाः,
स्वैरोन्मीलितसस्यजालसुभगं वर्षन्तु वर्षाम्बुदाः ।
क्षीरोदारसुवीमहेषु विहृतिं भाभातु पद्मालया,
चातुर्वर्ण्यमपि स्वधर्मनिरतं नित्योत्सवैरेधताम् ॥२६॥

इति निष्क्रांताः सर्वे० ।

COLOPHON इति जगन्नाथपंडितकृतौ रतिमन्मथे नाम्नि नाटके पंचमोऽकः ।

Post-Colophonic पौषासितषष्ठ्यां शाके च चंद्रबाणर्षिचन्द्रके । सम्पादितं श्रीहरिणा रतिमन्मथनाटकम् ।

## 6549. रससदनभाणः

OPENING श्रीगणेशाय नमः ।

प्रथते केरलदेशे प्रथितं राराष्टि कोटिलिंगपुरम् ।
श्रीमान् युवराजाख्यस्तत्रास्ते दीर्घदर्शिमुकुटमणिः ॥१ ।

कालीकृपाकटाक्षक्षपिताखिलकलुषोषधिषणेयं ।
रससदननामधेयं सुधियां प्रीत्यै करोति भाणमिदम् ॥२॥

CLOSING

कोटिलिंगपुरे वासी युवराजो महाकविः ।
प्ररीरचदिम भाणं रोचतां सुतरां सताम् ॥ १०॥

कोटिलिंगपुरे वासा भवभालाक्षिसंभवा ।
काली करोतु लोकानां सततं सकलं शिवम् ॥११॥

शास्त्रेषु शाततमशास्त्रसमापि बुद्धिः,
काव्येषु नव्यनलिनाधिकसौकुमारी ।
यस्यास्यतामरसलास्यरसा च वाणी,
हर्षं न कस्य कुरुते युवराज एषः ॥१२॥

COLOPHON & Post-colophonic शके १७७८ नलनामसंवत्सरे पौषे मासे शुक्लपक्षे एकादश्यां भौमवासरे एतस्य पुस्तकस्य लेखनं सम्पूर्णं । श्रीशंकरार्पणमस्तु ॥ श्रीरस्तु ।

अपि पुरुकृतरीढं पंडितमन्यमूढै-
र्मम तु सुकृतिरत्नं हंत गृह्णंति सतः ।
अवगणितमवद्यैर्दर्दुरैरप्ययाप्याः,
किमनणकमृणालं राजहंसास्त्यजंति ॥१३॥

व्याकृत्यादिसमस्तशास्त्रसमुदायांभोधिकुंभीसुतः,
काव्यालकृतिनाटकोद्धसुकृतौ काव्यस्य सत्यं समः ।
पुण्यः पंडितराजराजिगजताकुंभाद्रिसभेदने,
दम्भोलिर्युवराजकोविदमणिर्वर्तिं सर्वोपरि ॥१४॥

श्रीरस्तु ।

## 6555. सत्संगविजयनाटकम्

OPENING

श्रीकृष्णाय नमः ।

मुष्णंतं नवनीतमेककवलं हस्ते गृहीत्वा द्रुतं,
धावन्तं जननीभयादिव मुहुः पद्भ्यां करेणाग्रतः ।
कांचीनूपुरसिंजितप्रकटितस्मेराभिरामाननं,
भक्तोद्धारपरायणं परहरिं श्रीबालकृष्णं भजे ॥१॥

अपि च—कालिन्द्याः पुलिने कदम्बविटपिप्रत्यग्रशाखास्थली-
मारूढा कलकूजितेन नितरामानदयन्ती जनान् ।
शृंगारैकरसार्द्रदेहलतिका सा लौकिकी कोकिला,
काप्येषा कलिकल्मषैः कलिलितश्चेतश्चिरं चुम्बतु ॥२॥

CLOSING

नान्द्यन्ते सूत्रधारः— अलमतिविस्तरेण ।

राजा—भो, तत्त्व विचार, अलमधिकश्लाघया, यतः—
यत्संकल्पवशतो विचित्ररचना ब्रह्माण्डगोला इमे
स्थित्युत्पत्तिविनाशमाशु दधते ह्नोकं स सत्यो हरिः ।
जीवास्तत्परिचारका यदि कृपादृष्टि भजेयुस्तदा ।
स्तोत्राहीस्तदपीशभक्तिविधुरा न स्युः कृतार्थाः परम् ॥१९॥

अत इदमभ्यर्थये ।
स्वधर्मे सर्वेषामभिमतिरतीवाऽस्तु सततं
विवेक विज्ञानं विशतु निजभक्तिं सुविमलाम् ।

अत इदमभ्यर्थये
दुरूहध्वान्तानां विघटनपटुः श्रीशतरणिः
कृपादृष्ट्या दृष्टिं वितरतु जनेभ्यस्त्वविरतम् ॥२०॥

तच्छ्रीमद्गोवर्द्धनोद्धरणकृपासपादनाय श्रीद्वार प्रतिगंतुमुत्सुकोस्मि ।

तत्त्व विचारः—देव, आवामपि सहैवागच्छावः ।

इति निष्क्रान्ताः सर्वे ।

COLOPHON & Post-colophonic

इति श्रीसत्संगविजयनाम्नि नाटके सत्संगविजयो नाम पंचमोऽकस्समाप्तिमगमत् ।
निगमेन्दुनन्दकुमिते विक्रमवर्षेऽधिके ।

## 6560. गजेन्द्रचम्पूः सटीका

OPENING

॥ श्रीरामभद्राय नमः ॥ श्रीसीतादेव्यै नमः ॥ श्रीहनूमते नमः ॥

पर्वताः सागरे येन दासहस्तेन तारिताः ।
स श्रीपतिर्जगन्नाथस्तारकेशो विराजते ॥१॥
महादेवानंददायी प्रियनामा जनप्रियः ।
कविनाथो मम गुरुर्विट्ठलोऽत्र विराजते ॥२॥

नत्वा श्रीमद्रामचंद्रं गुरुं श्रीबिठ्ठलं तथा ।
गजेन्द्रचंपूप्रथमस्य स्फुटां टीकां करोम्यहं ।।३।।

श्रीमद्गुरुचरणाः आरब्धग्रंथसमाप्तिकामनापूर्त्यै शिष्टाचारपरिपालनार्थं चादौ त्रिमि: पद्यैर्मंगलमाचरति पूर्णकाममिति । अहं श्रीरामं नमामि, कथंभूतं श्रीरामं पूर्णाः कामाः मनोरथाः यस्य तं, पुनः की० कामवत्, मदनवत् अभिरामः सुन्दरः तमिति । ररक्षेति, असौ सः विलक्षणः अनिर्वचनीयविशेषशाली । एतादृशः हरिः भगवन्नारायणः वरीवर्ति सर्वोत्कर्षवत्तया राजते··············· ।

।। श्रीरामाय नमः ।। श्रीरामः शरणं मम: ।।

पूर्णकाम गुणग्राम विश्राम कामविद्विषः ।
कामाभिराम श्रीरामं मेघश्यामं नमाम्यहम् ।।
ररक्ष यः कुंजरचक्रशक्र नक्रस्य चक्रेण विपाट्य वक्त्रम् ।
सदानव(वन)स्थः खरहेतिहस्तो हरिर्वरीवर्ति विलक्षणोऽसौ ।।

CLOSING

सत्कुंजरस्य चरणं सुदृढ निपीड्यमेकान्तभावमवलम्ब्य मुमुक्षुरोह ।
श्रीमत्सुदर्शनमवाप्य निजस्वरूपं यामो(प्राप्नो) बलाविति निदर्शनमस्य नक्रः ।।४६ ।

तेनेभेन सरूपतां गतवता सद्योनुयातः परां,
कीर्ति पापहरां शरच्छशधरज्योत्स्नाभराडंबराम् ।
एतस्मिन् भुवने निधाय गरुडस्कन्धाधिरूढो नव,
शृण्वन्सामरवं जगाम सरवं धाम स्वकं श्यामलः । ५०।।

तेनेभेनेति—सरूपतां हरिणा समान रूप यस्य तस्य भाव स्तां गतवता प्राप्तवता मातंगेन गजेन्द्रेण अनुयातः अनुलक्षेण गतः हरिः भगवान् पाप किल्विष हरति नाशयति तां शरदः शरत्कालसबंधी यश्शशधरश्चन्द्रः तस्य ज्योत्ना चंद्रिका तस्या निभ सदृश आडंबरं यस्याः तां स्वकां स्वकीयां कीर्तिं यशः एतस्मिन् जगति निधाय स्थापयित्वा गरुडस्य स्कंधे उपविष्टः स्थितो भूत्वा नवं मधुरं साम्नः वेदस्य रव. गानध्वनिरूपः गरुडपक्षपातजनितः तं शृण्वन्नाकर्णयन् सन् संभ्रमात् वेगतः स्वक स्वीय परमं उत्तम धाम वैकुण्ठाख्यं स्थानं जगाम गतवान् ।।५०।।

COLOPHON & Post-colophonic

इति श्रीमद्राजाधिराजरामचन्द्रचरणाविरतस्मरणावदानचित्तवृत्तेः पंडावत्परिवत्परिपूजितपादपकजस्य विठ्ठलपंतस्य कृतेगजेन्द्रचम्प्वाः टीकायां तृतीयोल्लासः ।

शक १७६२ प्रभवनाम संवत्सरे आश्विन शु० १२ भृगौ इदं पुस्तकं समाप्तम् ।।

## 6568. मन्दारमकरन्दचंपूटीका

OPENING

।। श्रीमते हयकधराय नमः ।।

पराश्मपादपाथोजपरागपरमाणवे ।
नमः श्रीकान्तसीमन्तसारसिंदूरबिन्दवे ।।१।।

मंदारमकरंदाख्यां चन्द्रदेवकृतेः शुभाम् ।
टीकां शीघ्रेण बोधाय कुर्वे माधुर्यरंजिनीम् ॥२॥

निष्प्रत्यूहसमाप्तये चिकीर्षितस्येष्टदेवतां ध्यायति ।

CLOSING

राजाभेति–राजाभास्या–भासमानस्वर्णकर्णस्वपिस्वरा सारापाला पातु लोलाक्षी विकस्वनभासुरा–इति पदच्छेदः । सेति तच्छन्दबलादेति लभ्यते । या राजाभास्या चन्द्राभमुखी । राजा चन्द्रो नयो राजेतिमंजरी । स्वं पातीति स्वयं द्रव्यसाध्यमित्यर्थः । मुक्ताफलमितियावत् । स्वपमस्यास्तीति स्वपि भूषणमितियावत् । कर्णयोः स्वपि कर्णसंबधि भूषणमित्यर्थः । स्वरः गान भाषणं वा । कर्णस्वपि च स्वरश्च कर्णस्वपिस्वरौ च स्वर्णकर्णस्वपिस्वरौ भासमानौ स्वर्णकर्णस्वपिस्वरौ सुवर्णमयकर्णभूषणे शोभनाक्षरयुक्तभाषणे यस्याः सेति तथोक्त । स्वरो गाने भाषणे नासिकानिले । उदात्तादौ च षड्जादावकारादौ ध्वनौ पुमानित्यनेकार्थः । अराणामिदमार चक्रं तेन आसमतात्पालयतीत्यारापालो विष्णुः तेन सहिता सारापाला । स्वनस्य भासं तस्याः सरः मालादिकस्य स्वन भासर इव भासरो यस्याः सा तथोक्ता । लोला अस्थिरा सा लक्ष्मीः पातु रक्षतु पा रक्षणइत्यस्माल्लोट् ।

\+ \+ \+

## 6572. कथाकौतुकम्

OPENING

......................वीश्वराः ।

निधाय विपुला कीर्त्ति सुस्थिरां भुवनत्रये ।
नावशिष्टः कविः कश्चित्तेषां यो पत्तनान्भवेत् (?)॥
क्षमः शि(क्ष)यितु स्वल्पकाव्यशक्तियुतान्स्वयम् ।
तस्मादेह्य(वा)धुना कालं गतिं वीक्ष्य शुभाशुभम् ।
काव्य यद्यस्ति ते शक्तिर्विधातुं कुरु सत्वरम् ॥

CLOSING

मनुष्यभावमाश्रित्य त्वां च निस्तारकं प्रभुम् ।
सोऽहं वसामि चेद्ं वद कस्य विडम्बना ।
याचे त्वमेव वरदं वन(र)मेकं महेश्वर ।
भूयान्मम भवद्भक्तिर्लोकद्वयहितावहा
पिता बधुः सुहृत्स्वामी शरण्यः सर्वदेहिनाम् ।
अनन्यशरणं नाथ रक्ष मां परमेश्वर ॥

COLOPHON

इति यवनभाषापारंगमपंडितश्रीवरविरचिते कथाकौतुके पचदशं कौतुकम् । समाप्तश्चायमिदं शास्त्रम् । १४००

## 6575. कादम्बरी-टिप्पणिका

OPENING

श्रीगणेशाय नमः ॥ श्रीगुरुभ्यो नमः ।
कादंबर्युत्तरार्धटिप्पणिकाप्रारभः ।

देहद्वयेति—अम्बाशंकरी नमस्कुर्वे ॥ अनन्तरनमस्कारेणैवाभीष्टसिद्धये उभयोपादानं शक्तेर्वागात्मकत्वात् अगवत: अर्थात्मकत्वाद् विकलशब्दार्थपरिस्फूर्त्यर्थमिति बोध्यम् । देहद्वयेत्यादिविशेषणद्वयेन उत्तरपद्येन संचितायाः पूर्वं पितृकृतपूर्वकादम्बर्यां अर्धना-रीश्वरविग्रहवदभेदः संदर्भगुण्या सूचितः । सृष्टंगु क उत्पत्तिनिमित्तकारण-भूताविस्यर्थः ॥१॥

व्याधूतेति–व्याधूतानां कम्पितानां केसराणां स्कंधबालानां सटाः ताभिः अभक्तानां विशेषेण कराल भीषणं मुखं यस्येति ॥२॥

CLOSING ......अत्र सा पत्रलिखा कुतः स्यात् हि यस्मात कारणात्, खलु निश्चयेन, रोहिणी अाह्यो शप्तं शापग्रस्तं मामुपश्रुत्य, आकर्ण्य आवर्ज्य आवर्जनं कृत्वा आत्म-लोकं चन्द्रलोक विसर्जिता प्रेषिता चासतेर्या रात्रिः । अप्रार्थिता सुरतपरिसमाप्ति-र्यस्यामित्यंविधा या त्रपा लज्जा तया सुभगं । नैगमजनाः । नैगमो नयपौरोपनिषद्-वृत्तिषु वाणिजे इति हैमः । उत्फुल्लसहस्रपत्रनिवहो यस्मिन्नेतादृशं उदकं जल त वहतीत्यंवशीले । उदकस्य उदादेशः, अपरिसमाप्तानि अपरिपूर्णानि । अपुनरुक्तानि कदाचिदसेवितानि प्रतिदिननवीनानीत्यर्थः । तानि तानि वक्तुमशक्यानि ।

COLOPHON इति रानडे इत्युपनामक श(सा)मरायांगजेन विष्णुशर्मणा श्रीबादशाह-अकब्बर-जलालुद्दीनाश्रित-महोपाध्यायश्रीभानुचंद्रमहापण्डितातिवासिमहोपाध्याय-श्रीसिध्दचद्र-मणिपंडित-सार्वभौमविरचितकादम्बर्युत्तरार्धटीकानुस रेण टिप्पणिका संक्षेपेण अयाशय-ज्ञानार्थं निर्मिता समाप्ता ।

Post-colophonic शके १७८६ प्रभवनाम सवत्सरे मार्ग० शु० ५ रवीवार ।

## 6576. कादम्बरी-विषमपदविवरण-टीका

OPENING ॥ श्रीगणेशाय नमः ॥

करवलयितशेषो मोक्षलक्ष्म्या निवेशः सकलजनमहेशः स्वर्धुनीशीतकेशः ।
सुरनुतवरवेषस्तत्त्वविद्योपदेशस्तिलकितसुनिशेशश्चिद्विशेषोऽवतान्नः ॥१ ।

वेतंडोत्तुंगतुण्डस्तान्मुदे नः पार्वतीजनिः ।
हेरंबः प्रबलारातिविघ्नकुंजरकेसरी ॥२॥

अखण्डं सच्चिदानदमवाङ्मनसगोचरम् ।
आविरस्तुपुरोवस्कतचौपनिषदं मम ॥३॥

अनादिसदाचारप्राप्तकर्त्तव्यताकं विघ्नविघाताय कृत मंगलमादौ शिष्यशिक्षार्थ-मानिबध्नाति । रजोजुष इति अजाय नम इत्यन्वयः, विशेषणमहिम्नः, विशेष्यं प्रत्याययितुं विशेषणान्याह ॥ सर्गस्थितोति । विशेषणैरेव विशेष्यबोधाद्विशेष्यवाचकपदानुपादान-निबंधनं न्यूनपदत्वं न देश्यं । अयमुदयति मुद्राभजनः पद्मिनीनामित्यादिवत् । + +

CLOSING ..........। दुःखासिकेति । दुःखावस्थितिर्दुःखासिका । किंपुरुषविषयं किंपुरुषदेश अपि चास्या इति । न प्रावर्तत वाणीत्यनेनान्वयः । अपहस्तितः वंचितः ।

कौलीनेनेति । 'स्यात्कौलीनं लोकवादे' इत्यमरः रतिरससागरतरंगैरिति यौवनविला-शास्तरंगत्वेन स्नपिताः । सागरतरंगैरपि मेघद्वारा वृष्टिः पात्यते लिखितं नामेति सौभाग्येन शशिनि नाम लिखितं महमुत्कृष्टमिति शशिरूपसमुच्चितपत्रैः सौभाग्येन लिखितमित्यर्थः । ऐंदवाभिरिवेति । कलाभिर्वैदग्ध्यादिभिरमृत दृष्टं यथा ऐंदवीभिः कलाभिरमृतवर्षणं क्रियते सांप्रत युक्तम् । बंधकीधाष्टर्यमिति । पुंश्चलीधर्मस्त्रीबंधक्यसती कुलटेश्वरी-त्यमरः । प्रबुद्धो ज्ञानी ।

COLOPHON

इति श्रीकादंबरीपूर्वार्धविषमपदविवरणं समाप्तं ।।

## 6580. भोजप्रबंधः

OPENING

।। ऐं नमः ।।

प्रदवसेनि जिनं नत्वा गोतमादिगणाधिपान् ।
चरित्रमप्रदानस्य कुर्वे कौतूहलादयम् (दिदम्)।।१।।

पूर्वभवे यथा दान दत्तो भोजनृपेण तु ।
प्रबंधं तस्य वक्ष्यामि भव्यानां बोधहेतवे ।।२।।

प्रपंचकरिमादाय यावन्नायाति कोष्टिकः ।
तावत्कन्यासमादिष्टं मापितु न जान से ।।६१।।
कोष्टिको यथापूर्वं माप्य कर्मार्प्यते यथा ।
मापमति तथा रीत्या ह्यन्यत्वं वेत्सि तद्वद ।।६२।।

+ + +

उभयोरपि वृत्तांतं श्रुतम्भूपेन ।

+ + +

## 6582. माधवानल-कामकन्दला-कथा

OPENING

।। श्रीगणेशाय नमः ।।

प्रणम्य परया भक्त्या हसयानां सरस्वतीम् ।
तस्याः प्रसादमासाद्य करिष्यामि कथामिमाम् ।।१।।

अस्ति संसारतिलकभूता पुष्पावती नाम नगरी ।

निरामया निरातंकाः संतुष्टाः परमायुषः
यस्यां निवसंति सुखैः कालज्ञाता इव प्रजाः ।।

तत्र राजा गोविन्दचन्द्रो नाम । तस्य राज्ञी सप्तशतानि, तासां मध्ये रुद्रा महादेवी पट्टराज्ञी । यतः योषितां चत्वारो (चतस्रो)जातयः । प्रथमतः पद्मिनी, तस्या लक्षणं—

सम्पूर्णेन्दुमुखी विलोलनयना पीनस्तनी दक्षिणा,
मृद्वंगी विकचारविंदसुरभिः श्यामाथ गौरद्युतिः ।
अल्पाहाररती विलासकुशला हंसस्वना सद्गति-
र्लज्जालुर्गुरुदेवपूजनपरा स्यान्नायिका पद्मिनी ।।३।।

CLOSING इति उक्त्वा राजा स्वहस्तेन खड्गमादाय स्वशिरः छेत्तुं प्रारेभे । पश्चाद् वैतालेनाऽमृतं तयोरुपरि निक्षिप्तं । ततः क्षणेन द्वावपि जीवितौ । राजा हर्षो जातः

विजेतव्या लंका चरणतरणीयो जलनिधि-
र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।
तथाप्येको रामः सकलमवधीद्राक्षसकुलं,
क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥

COLOPHON संवत १७११ वर्षे श्रावणः मासे शुक्लपक्षे दशम्यां तिथौ शुक्रवारे लिखितं श्रीफतेपुरमध्ये पौष्करज्ञातीयेन मूलचंद्रेण स्वपठनार्थं ।

Post-colophonic इति श्रीमाधवानल-कामकंदलाकथा समाप्ता ॥

## 6587. वासवदत्ताऽऽख्यायिकायाः काञ्चनदर्पणाख्या व्याख्या

OPENING ॥ श्रीगणेशाय नमः ॥

यां रक्ततामनितरामतुलां दधानो
दिक्प्रौढदारगृहयोरनवप्रवासः ।
योषिद्द्वयीपतिविडंबनभूस्स शश्व-
त्पायादपायसमुदायहरो रविर्नः ॥१॥

एकोऽस्ते द्विसमस्त्रिलोचन इति ख्यातश्चतुर्भिस्स्तुतो
वेदैः पञ्चमुखः षडाननपिता सप्तर्षिभिर्वन्दितः ।
अष्टाङ्गो नवतुल्य अ-मरगणो वासो दशाशा दध-
त्स्वदर्श्चैकादश सोऽवतान्नविजितो यो द्वादशात्माशुभिः ॥२॥

भूदेवानां नृदेवानामाशिषां प्रणतेः पदम् ।
देवतायाः प्रसादेन वाञ्छा सिद्धेः परं पदम् ॥३॥

CLOSING समरप्रदोषस्य रणरजनीमुखस्य, पतितेन महापातकिनेव विमुक्तगोत्रेण, गोत्रं वंशः गोत्रा पृथ्वी । आशंकित ऊर्व्वोर्भंगो येन । पक्षे उरुर्महान्भगः पराजयः शरतल्पं शरशय्या० चिराय० कार्तिकशुक्लदशमीमारभ्य माघशुक्लाष्टमीपर्यंतमित्युदयशंकरपाठकाः अत्रोपपत्तिस्तु तेषां कृतौ द्रष्टव्या । पक्षे चिराय चिररात्रयः'चिरस्येति चिराचंका' इत्यमरः । विकलीकृत विह्वलीभूतं सर्वाङ्गं यस्य । शक्तेर्बलस्य मोक्ष त्यागं, पक्षे शक्तेर्वासवदत्ताया अमोघायाः मोक्षं । घटोत्कचे त्याग 'शक्तिरायुधभेदे स्यादुत्साहादौ बले स्त्रियामिति हेमचंद्रः । निधन मरणं, मरण निधनोऽस्त्रियामित्यमरः । प्रतियत्न(पत्र) वृत्तांतेन ज्ञातवृत्तांतेन । कर्मणि क्तः । आर्यपुत्र, कदर्पकेतो, क्षणेन बहुदुःख भवद्वियोगमनुभवतीं मां विलोक्य शापं शिलामयत्वरूपं आर्यपुत्रस्य करस्पर्शावधिरंतोऽस्य तादृशमकरोत् । नागरोक्तार्यपुत्रेति नाटयोक्त्या च प्रयुज्यत इति भरतः । ततः कदर्पकेतुः समं वासवदत्तासंगसमकालमागतस्तेन मकरदेन वासवदत्तया सहितः स्वपुर कुसुमपुर गत्वा हृदयं मनोऽनतिक्रम्य यथाहृदयं मनोनुरूपमभिलषित येषु तानि सुखानि संभोगशृङ्गारसंबंधीन्य-

नुभवन्कालं निनाय । चेतो हृदयं स्वांतं हृन्मानसं मन इत्यमरः । वासवदत्तामधिकृत्य कृताख्यायिका वासवदत्तामधिकृत्य कृते ग्रंथे इत्यर्थे वृद्धाच्छः । तस्य लुबाख्यायिकाभ्यो बहुलमिति लुप् । वासवदत्ता समाप्तेति पाठस्तु भ्रममूलकः ।

CLOSING

के न वासवदत्ताया मलकाराः प्रसाधकाः ।
दर्पणं केचनेक्ष्यते व्याख्याने वरभूषणे ।।१।।
दोष. कृतौ सुमतयो मम कोपि चेत्स,
युष्माभिरत्र कृपया विनिवारणीयः ।
भार्ताः खगाः समवलोक्य सवर्यबाधां,
निःशक्तिका अपि कुर्वन्ति यतः समतात् ।।२।।

त्रिलोकचन्द्रात्मजकृष्णरामसूनुस्त्रिपाठी शिवरामनामा ।
व्याख्यामकार्षं कृतिनः सुबधोः कृतेरिमा कांचनदर्पणाख्याम् ।।

COLOPHON

इति श्रीशिवरामकृता दर्पणाख्या वासवदत्ताव्याख्या । सं० १८५७ ।

## 6588 वीरनारायणचरितम्

OPENING
(On of 3a)

......नवनारंगमगिभिर्भु जगलतापरिष्ठ(ष्व)गघन्यतरुगापूगद्रु मैर्ललितलवलीलता-लिगितलवंगह्रीरवेरहारिभिः हारीतहरितहरिद्रादलैः प्रच्छायोपचितशृंगिबेरपरि-पाटिभिः पक्ष्मलितसूरणैः प्रतितवजाजिराजिभिः कुटिलशुकत्रोटिलकोटिपाटितदाडिम-स्तोमैर्व्याकोशकोशातकीगुच्छसंचयमंछुप्रवृत्तिभिरद्व लनरकारवेल्लवल्लीवलयैः पटुतरपटोल-परिणाहैः कोमलालाबुशालिभिः पुष्यत्पुष्पलतैरुरतरैर्वाहनिनदितैर्वरासारैरम्यहितैर्वार्हता-भ्युदयैरखिलभुवनाभिरामैरारामैः सुलभरामणीयकातिशयमततविलिखितहालिकहृदय-हल्लहलकैः शस्वतपरिपालनपरायणानेकसंरिकदारिकाकलितकोलाहलाकुलितचपलविहग-कुलैरदूषितोन्मेषकोदृशैः श्यामलश्यामाकसंहतिभिरनवावरकवट्टकाग्रैः समुद्गतमुद्ग-सामग्र्यैरनणुकचणकचणैः संरिकटुम्बिनीमादरान्ववलोकितबादरोदर्यमसृणमसूरस्थलैः...

CLOSING

..........विश्वावसुनिभाना गायकानां निग्वद्यवीणातोद्यानुमृतानि अमृतस्यंदीनि गीतानि निर्विशन् अनुपमलावण्यसाराभिदनुत्तलक्ष्मीविभ्रमाभिः प्रगल्भयुवतिभिः सफलयन् यौवन सरसकविकाव्यश्रवणेन कर्णो प्रतिदिनमलकुर्वन् आनन्दस्य परा कोटि-मवाप्य सर्वोत्कर्षेण वर्तमानः साक्षाल्लक्ष्मी(क्ष्मो)ममुच्चार्यमाणजेजोवशब्दो निरतरप्रणत सामन्तनरेन्द्रमौलिमालामकरंदसुरभितचरणारविन्दो जयति विश्वाधिक वभवो वेम-भूपालः ।

COLOPHON

इति गद्यकविसार्वभौमस्य पद्यकविपरमेश्वरस्य शब्दप्रपंचचतुराननस्य वत्सकुल-तिलकस्य महाकवेरभिनवबाणस्य* कृतौ श्रीवीरनारायणचरिते पचमोल्लासः समाप्तः सम्पूर्णमिदं वीरनारायणचरित ।।छः।।

Post-colophonic

स० १६४८ का आषाढ शु० ११ भृगौ लिखित काशिनाथेन ।

*The name of the poet was वामनभट्ट son of कोमतियज्वन् and grandson of वरदाग्निचित् ।

## 6600. पंचाख्यानसारः

OPENING

श्रीगणेशाय नमः । ॐ नमः श्रीसरस्वत्यै ॥

नत्वा ब्राह्मीं बृहत्पंचतन्त्रमुद्ध्रियते मया ।
संक्षिप्तरुचिसत्वार्थं चात्मनो बुद्धिहेतवे ॥१॥

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम पुरम् । तत्र सकलार्थशास्त्रवित् अमरशक्तिर्नाम राजा तस्य त्रयः पुत्राः परमदुर्मेधसः, उग्रशक्तिः अमरशक्तिः वसुशक्तिश्च । अथ तान् महामूर्खान् समालोक्य राजा सचिवानाहूयोवाच, भो ज्ञातमेतत् यन्ममैते पुत्राः शास्त्रविवेकरहिता इति उक्तं च–

अज्ञातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम् ।
यतस्तौ स्वल्पदोषाय यावज्जीव जडो दहेत् ॥

CLOSING

इत्यादि बहुप्रकारं खेदं कृत्वा लुब्धकः स्वगृहं गतः । अथ तस्मिन्दूरं गते सर्वेऽपि ते काककूर्मादयो चित्रांगो हिरण्यश्च सुहृद एकत्र मिलित्वा परस्पर समालिंग्य पुनर्जाता इव आत्मानं मन्यमानास्तदेव सरस्तीरमासाद्य महता सुखेन सुभाषितकथागोष्ठीविनोदेन प्रमुदिताः कालं नयति स्म, एवं ज्ञात्वा विवेकिभिर्मित्रसंग्रहः कर्तव्य एव, इतरमित्रैः सह व्याजेन वर्तितव्यम्; उक्तं च–

यो मित्राणि करोत्यत्र न कौटिल्येन वर्तते ।
स परां श्रियमाप्नोति न केनापि स वच्यते ॥

COLOPHON

इति श्रीविष्णुशर्माचार्यविनिर्मिते बृहत्पचाख्यानकसारे श्रीघनरत्नाचार्यसमुद्धृते मित्रसंप्राप्तिनाम द्वितीयं तत्र समाप्तमिति ।

अथारभ्यते काकोलूकीयनाम्नस्तृतीयं तंत्रं····।

## 6603. शनि प्रबन्धः

OPENING

अथ शनिप्रबंधो लिख्यते ॥

अवंत्यामन्यदा ज्योतिर्विज्ञेयर्षदि(यं यदि ?)संस्थितः ।
राजा श्रीविक्रमादित्यः पप्रच्छ ग्रहसारताम् ॥१॥

तत्रोकोत्वकग्रहः सारः सूर्यः सर्वप्रकाशकः ।
एकश्चात्वकग्रहः सारः चन्द्रो नेत्रामृतांजनः ॥२॥

CLOSING

इत्युक्तेऽपि शनैः पादौ नामुचद्विक्रमो नृपः ।
वरदानाग्रहं युक्तो वारं वारं चकार च । ७८॥

रंजितस्तद्वचो युक्ता शनिः प्राह नरेश्वरम् ।
यो वक्ष्यति कथामेतां तस्य न स्या व्यथाकरः ॥७९॥

तुष्टिरेताश्च ते स्युर्वरोऽयं मयका तव ।
वसप्रोच्येऽपि मंदोऽपि ययौ स्थानं निजं मुदा ॥८०॥

गंधारबंधिरे सद्यः परपञ्जोसमीहितम् ।
चकार शनिसंबंधं पंडितः पद्मसागरः ॥८१॥

COLOPHON इति श्रीशनिप्रबंधवार्ता सम्पूर्णा ।

Post-colophonic संवत् १७१६ वर्षे फागुण सुदी ६ दिने ।

## 6606. किमिन्दु-श्लोकस्य व्याख्या

OPENING श्रीगणेशाय नमः ।

किमिन्दुरिति । अत्र किमु मुखमिति ज्ञात्वापि किम् इत्युत्प्रेक्षणात् । मुखादीनां निश्चयः । ततश्चानिर्णयातो वितर्कः । तथाहि–विश्वविसारिलावण्यपूरपरिवेषमुखीं सौधांतःस्थितसोपानमार्गेण प्रासादशिखरमरोहमाणां मुखमात्रदृश्यां मुखसौरभलुब्ध-दलिपटलान्वीयमानमुखीमालक्ष्य कश्चिद्वितर्कयति ।

CLOSING अन्यत्रापि दुर्वारस्मरमार्गणा इति । अनिर्णयात दृढीकर्तुमबलापदोपादानम् । त्रिजगज्जैत्रस्य मनोजमहावीरस्य जगद्विजयैकसाधनीभूता कथमबला स्यात् ।

नूनं हि ते कविवरा विपरीतबोधा
ये नित्यमाहुरबला इति कामिनीस्ताः ॥
याभिर्विलोलतर(तर)तारकदृष्टिपातैः,
शक्रादयोऽपि विजिता अबलाः कथं ताः ॥

इति तथैवानिर्णयातो व···ध्वनिः ।

COLOPHON इति बालचन्द्रकृतः श्लोकार्थः सम्पूर्णः ।

Post-colophonic संवत् १६७० वर्षे पोष शुदि प्रतिपत् शनौ लिखित मुकुन्देन ।

## 6607. चतुर्वर्णविवाहप्रशस्तिः

OPENING श्रीॐ स्वस्ति श्रीमत्सकलविद्याविनोदरसरसिकविराजमानसम्मंडलीसमाजसम्मंडन-विहितदिग्विजयवादीन्द्र दमर्द्दनविद्वज्जनकमलकुलप्रकाशनमार्त्तंडमूर्तिषु सदाचारचरण-परिलब्धगरिष्ठप्रतिष्ठावशीकृतवसिष्ठादिमुनिगणजेगीयमानयशश्चंद्रकरधवलीकृतजग-त्त्रितयेषु निखिलनरदनुजपूज्यपादाब्जपरममुरनिकरमौलिभूषायितमुकुटमणिराजरंजित महाच्यंतरमाणिक्यविस्फुरत्किरणनीराजितचरणपीठसहस्राक्षसमसामतेरिताशावचनेषु ॥१॥ इति ब्राह्मणस्य गोत्राचारे प्रशस्तिः ।

CLOSING स्वस्ति श्रीमत्सकलस्वधर्माचरणविख्यातसत्कीर्त्तिप्रचारितनामाहूतभिक्षुजनाभिलाष-पूरणकृतार्थीकृतनिजमनुष्यावतारेषु गुरुजनपरिचर्यापरायणविदितगोविप्रनारायणगुणा-नुवादगायनश्रवणविषयीविहितरामायणदानसाधितदक्षिणोत्तरायणसमप्रतिष्ठासागरेषु

परेंगितज्ञानविचक्षणचतुरवरमौमंडलमौलिविराजमानवरमुकुटरत्नराजिमंडितमहार्घ्यतरमरकतमणिमरीचिचयचुंबितचरणपीठेषु ॥ इति शूद्रस्य विवाहे प्रशस्तिः ।

## 6609. पत्रलेखनविधिः

OPENIGN

अथ म्मीगचधन्मयकानां लेखविलनविधिर्लिख्यते—

स्वस्तिश्रीलषनं मनोज्ञवनं त्रैलोक्यलोकावनं,
विश्वाबहिलवनं प्रहृष्टभुवनं सौभाग्यतूमावनं ।
स्फूर्तेर्नो लवनं शिवाध्वजवनं श्रेयोवनीजीवनं,
पापाद्द्वेषयवनं श्रीमूला निधवनं पार्श्वं स्तुवे पावनम् ॥१॥

स्वस्तिश्रीमकर सरोरुहकर गाभीर्यरत्नाकरं,
श्यामाश्यामकरं जगद्दिनकरं कीर्त्याजितोषाकरम् ।
ध्वस्ताराातिकर विद्यास्तमुकरं श्रीपद्मपद्माकर,
बुद्धांगीप्रकरं समाधिसमकर पार्श्वं स्तुवे शंकरम् ॥२॥

CLOSING

स्वस्तिश्रीचतुर्विंशतिजीनपदपंकजं प्रणम्य श्रीक्षतिप्रतिष्टननगरात् धर्मघोषगणिभषितश्रीरपुरश्रीपुरनगरे सुश्रावकपुण्यप्रभावकश्रीजीन ज्ञामुगटमंडितोत्तमांग श्रीदार्यगांभीर्यधैर्यवर्यचातुर्यादिसर्वगुणालंकृतसर्वाङ्गसकलश्रावर्मावसरप्रसरद्दानलहरीतरगएकान्तश्रीदेवगुरुदृढभक्तिरगश्रीदार्यगांभीर्यधैर्यादिसकलगुणसुन्दरप्रभावकपुरदरश्रीसंघमुख्यश्रीजीनशासन ........................................................................
सर्वावसरप्राक्ष्वनं संघमुख्य सकनायक श्रा श्रो......... कलोये ।

## 6624. लौकिकन्यायसुभाषितसंग्रहः

OPENING

श्रीगणेशाय नमः ।

यत्कीर्तिप्रभया सुशुक्लभुवते मायाप्रभावैः प्रभो
र्नीलादेर्जनिता प्रतीतिरचला द्यौः सद्वृता शोभते ॥
यच्छिष्योडुगणैः समे गुरुरहो हार्दान्धकारापहा,
श्रीमद्रामदयालुरिंदुरमलो मोदाय भूयात्सदा ॥१॥
नत्वा शंभुं हरिं गौरीं विधिं ढुंढिं च भारतीम् ।
क्रियते रघुनाथेन लौकिकन्यायसंग्रहः ॥२॥

CLOSING

यो ब्रह्मा यश्च विष्णुर्वसुतनुरपि यो यश्च गौर्यादिमूर्तिर्यश्चात्मा सर्वजतोः श्रुतिशिखरगिरां यश्च तात्पर्यभूमिः ।
यस्याबोधात्समुत्थो व्रजति च विलय यस्य बोधात्प्रपंचस्त शुद्धं संप्रपद्ये शिवममरमजं शम्भुमीशानमीड्यम् ॥४॥

CLOSING

इति श्रीरघुनाथवर्मणा विरचितो लौकिकन्यायसंग्रहः समाप्तः ।

## *6625.* विद्वद्गोष्ठी

OPENING

श्रीमालवदेशे चिरंतननगर्यां श्रीधारायां श्रीभोजराजसभायां पंडितपूरितायां विद्यागुणगोष्ठयां श्रीधनपालपंडितेन श्रीजिनधर्मंगतेन राज्ञोऽग्रे प्रोक्तम् ।

येषां न विद्या न तपो न दानं न चापि शीलं न गुणो न धर्मः ।
ते मर्त्यलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरंति ॥

CLOSING

उष्ट्रः प्राह–एकस्यां घटिकायां योजनगामी सदा नृपतिमान्यः भारोद्वहनसमर्थः कथं समो निर्गुणो साद्य(ध्यः) । ततो विचक्षणाख्यायि । येषां मनुष्यरूपेण च भस्मरूपाः । ततो रक्षा प्राह–मूटकमध्ये क्षिप्त्वा करोम्यहु सकलधान्यरक्षा, जका मां व वं ते(?) मनुजो मुखशुद्धिकरी सुगंधाद्या ।।२०।।

ततो विदुषा प्रोक्तं–

येषा न विद्या० नचापि० ते मर्त्यं । ते कीदृशा वंत्ति च वीतरागः ।।१२१।।

COLOPHON

इति विद्वद्गोष्ठी सम्पूर्णा ।

## *6628.* सज्जनचित्तवल्लभः सस्तबकः

OPENING

नत्वा वीरजिनं जगत्त्रयगुरुं मुक्तिस्त्रियो वल्लभम्
पुष्पेपुक्षयनीतबाणनिवहं संसारदुःखापहम् ।
वक्ष्ये भव्यजनप्रबोधजननं ग्रन्थं समासादहं,
नाम्ना सज्जनचित्तवल्लभमिमं शृण्वंतु संतो जनाः ।।१।।

रात्रिश्चन्द्रमसा बिनाब्जनिवहैर्नो भाति पद्माकरो
यद्वत् पंडितलोकवर्जितसभा दंतीव दंतं विना ।
पुष्पं गंधविवर्जितं मृतपतिःस्त्रीदेह(रेव)स्तद्वन्मुनि-
श्चारित्रेण विना न भाति सततं यद्यप्यसौ शास्त्रवान् ।।२।।

CLOSING

वृत्तैर्विंशतिभिश्चतुर्भिरधिकैः सल्लक्षणेनान्वितैः,
ग्रंथं सज्जनचित्तवल्लभमिमं श्रीमल्लषेणोदितम ।
श्रुत्वा सुमेन्द्रियकुञ्जरान् समदनान् रुधंतु ते दुर्जयान्,
विद्वांसो विषयाटवीषु सततं संसारविच्छित्तये ।।

COLOPHON

इति श्रीसज्जनचित्तवल्लभ समाप्तम् ।

## *6630.* सभातरंगिणी

OPENING

।। श्रीरामजी ।।

किंचिदाश्रयसौन्दर्याद्वत्ते शोभामसमाध्वयि (श्रयि) ।
कान्ताविलोचने न्यस्तं मलीमसमिवाञ्जनम् ।।१।

CLOSING

न विश्वसेत्कुमित्रे च मित्रे नैव च विश्वसेत् ।
कदाचित्कुपितं मित्रं सर्वं गुह्यं प्रकाशते ।।२६।। वह्म

## 6686 पातञ्जलमहाभाष्यं भाष्यप्रदीपयुक्तम्

OPENING (Ct.) ॥ श्रीगणेशाय नमः ॥

प्रत्ययः अधिकारेणेति । यदि तु प्रकारान्तरेण सञ्ज्ञिस्वरूपनिर्देशादिना संज्ञा क्रियते ततो न स्यादतिप्रसगः । यदा तु गौरवादिप्रसंगपरिहारायाधिकारेण क्रियते ततोऽपि प्रसग इत्यर्थः तत्र यदि सर्वे सञ्ज्ञिनः स्वरूपेण निर्दिश्येरन् ततो गौरवं स्यात् । अथ सण्प्रत्यय इति सनः सकारादारभ्य कपः पकारेण प्रत्याहाराश्रयणेन संज्ञा विधीयेत । तदानेकस्य पकारस्य संभवात्सन्देहः स्यात् ननु प्रतियोगमुपस्थानेपि वाक्यभेदप्रसगात् प्रकृत्यादीनां-प्रत्ययसञ्ज्ञा न भविष्यति

OPENING (w) ॥ श्रीगणेशाय नमः ॥

प्रत्ययः अधिकारेणायं प्रत्ययसंज्ञा क्रियते सामप्रकृत्युपपदोपाधीनामपि प्राप्नोति तस्याः प्रतिषेधो वक्तव्यः·······································································
एतेषां प्रतिषेधो वक्तव्यः ॥

CLOSING ·········अत्रापि शपा व्यवधानात् । एकादेशे कृते नास्ति व्यवधानं एकादेशः पूर्व-विधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेवेति ।। इतिश्रीभगवत्पतञ्जलिविर-चिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य प्रथमे पादे पचममाह्निकम् ।

## 6689. प्रत्याख्यानमण्डनम्

OPENING श्रीगणेशाय नमः ।

प्रत्ययलोपे प्रत्ययलक्षणम् । नन्वत्रादिम प्रत्ययग्रहणं किं ? असति तस्मिन्प्रत्यय-लोप इत्यर्थाभावात् क्रियते, आहोस्विदप्रत्ययस्याऽपि लोप इत्यर्थो माविज्ञायीति । नाद्यः । प्रत्ययलक्षणमित्यनेन प्रत्ययनिमित्त कार्यं उच्यते तच्च लोपोयेसत्यतिदिश्यमानं लोप-स्याभावरूपत्वात् प्रतियोग्यपेक्षाया प्रत्यासत्त्या प्रत्ययस्यैव लोपो विज्ञास्यते । यथा क्रियमाणेऽपि प्रत्ययग्रहणे प्रत्ययस्य लोपेऽन्यनिमित्त कार्यं दधिमध्वित्यादौ स्वमो-र्लोपे क्विप्रत्ययनिमित्तो ह्रस्वस्येति तुक् नातिदिश्यते । किन्तु प्रत्ययस्यलोपस्तन्निमित्त-कमेवप्रत्यासत्तेरतिदिश्यते । न द्वितीयः ।.......

CLOSING एवं भाष्यादिपदग्रयस्वारस्ये दृढदूषकयुक्तेरभावे सहा यमवलम्ब्य कथमेतत् दूषयांच-क्रुरिति त एव प्रष्टव्या इति मात्सर्यमुत्सार्य निपुणतरं विभावनीय सुहृद्भिर्विद्भिः ।

COLOPHON इति श्रीमत्पाठकमुरारीसूनुपाठकलक्ष्मणात्मजपाठकरामचन्द्रविरचित प्रत्याहार-मंडनं समाप्तम् ।

## 6738. स्वरप्रदीपिका

OPENING ॥ श्रीरामाय नमः ॥

अथ स्वरप्रकरणं निरूप्यते । अनुदात्तं पदमेकवर्जम् । परिभाषेयं स्वरविधि-

विषया ॥१॥ यस्मिन्पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताच्क स्यात् ॥ तद्यथा गोपायति वक्ष्यति ॥ धातोरन्त उदात्तो भवति, इति तमेकमच वर्जयित्वा परिशिष्टमनुदात्त भवति अत्र गुप्धातोरन्त उदात्तः तत आप्-प्रत्ययः प्रत्ययाश्चाद्युदात्ता इत्याद्युदात्तः, ततः सनाद्यन्ता इति धातुत्वे तस्यान्तः उदात्तः स च पश्चात्प्राप्तत्वात् सति शिष्टत्वमिति प्रागुक्ताभ्यामुदात्ताभ्यां बलवान् अवशिष्ट द्वयमनुदात्तम् शप्पित्वादनुदात्तः तेन सह पररूपे एकादेश उदात्तेनेत्यकार उदात्तः ततः परस्तिप् (र्षो) उदात्तादनुदात्तस्येति स्वरितः तिप स्वरितमाश्रित्य तु पुनः शेषनिघातो न भवति यथोद्देशपक्षे त्रैपादिकस्य त.........स्यासिद्धत्वात् :

CLOSING

.............प्रत्ययस्वरेणान्तोदात्तगतिरनन्तरः इति पुरःशब्दः प्रकृतिस्वरः उदात्त-स्वरितपरस्य सन्नतरः इत्योकारोनुदात्ततरः यज्ञस्येत्यत्र उदात्तादनुदात्तस्येति भूयः स्वरितत्वादेव नित्यतोदात्तम्, ऋत्विक्शब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः ।

COLOPHON & Post-colophonic

इति श्रीमद्देवीश्वरात्मजरामसेवकतनूद्भवकृष्णाचार्यकृतस्वरप्रदीपिका समाप्ता शुभं भूयात् । स०१८७५ मिति वर्षं० वदी १० बुधवार ।

## 6742. कातन्त्रव्याकरणं ललितवृत्तिसमेतम्

OPENING (on f 5 a)

........ऋलृदीर्घसंज्ञया क्व प्रयोजनम्, दीर्घमामिसनावित्यादिकुवृक्षाणाम् अग्नीनाम् वायूनाम् पितृणाम् । वृक्षः, अग्नि, वायु पितृ एभ्यो बहुवचनमाम्प्रत्ययः । आमि चतुरिति मध्येनुरामः । उकारस्तृतीयादौ तु परादिरित्यर्थः । दीर्घमामि सनौ दीर्घा आकारादयः । परमगुरुसंज्ञापि वक्तव्या, क्व तया प्रयोजनम्, गुरोश्च निष्ठाया सेट् इत्यादिषु । देहादेहचेष्टायां देहदेहिनमिति गुरोश्च निष्ठायामित्यप्रत्ययः ।

CLOSING

... .....अनुपसर्गात्फुल्लक्षीवकृशोल्लाघाः । फुल्लक्षीवकृश उल्लाघ एते निपात्यते । यदि उपसर्गात्परे न स्युः । त्रिफला विशरणे । गत्यर्थाकर्मकेति क्तः । चर-फलोरुश्चेति उत्वम् नकारलत्व च निपात्यते, फुल्लः क्षीवृ मदे । कृश तनूकरणे लाघृ-सामर्थ्ये, उत्पूर्वक्तप्रत्ययस्य तलोपो निपात्यते । अनुपसर्गादिति किम् । प्रफुल्लः, प्रक्षीवितः, प्रकृशितः, सं उल्लाघितः, उत्फुल्लसफुल्लयोर्निपातनात् । वक्तव्ये—प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटा, इति कोष. । अवर्णादूटो वृद्धिः, अवर्णात्परस्य ऊटो वृद्धिर्भवति भावयतीति भौः, यावतीति यौः, भू सत्तायां यु मिश्रणे । भावत प्रयुंक्ते इति हेनाविनक्विप्कारिततलोपः वृद्धिः द्व्वोः शूटाविति वस्य ऊट् । टकारः इहार्थः अनेन ऊटो वृद्धिः ।

COLOPHON

इति लघुवृत्तौ कृत्प्रकरणे धातुसंबंधो पाद. षष्ठः । कृत्प्रकरणं समाप्तं ।
समाप्तेय लघुललितवृत्तिरितिशुभम् ।

## 6745. कुमारव्याकरणम्

OPENING

॥६॥ ॐ श्रीवीतरागाय ॥

अथ परस्मैपदानि । अथ नेतराणि दशविभक्तीनां पूर्वाणि नव नव वचनानि परस्मै-पदानि स्युः ति-तस् अंति । सि, थस्, थ । मि, वस्, मस् । एव सर्वत्र । वचन् ॥६०॥छ॥

CLOSING — आवत्तरे वा वृद्धिः आर उत्तरे वा द्विसंध्यक्षरवृद्धिः स्यात् । आर । ऐभ्य । ३४॥

COLOPHON — इति श्री मेरुतुंगसूरिविरचितायां बालावबोधवृद्धितो बारग्याति अष्टम: पादः, समाप्तः ॥ एवं पद ३५॥छ॥ ग्रंथोग्रंथ ॥४८०॥छ॥छ॥

Post-Colophonic — संवत् १४६३ वर्षे श्रावण वदि नवम्यां शनौ लिखितं ॥छ॥·················

कल्याणमस्तु लेखकपाठकयोः ॥छ॥

## 6842. वाक्यप्रकाशमौक्तिकम्

OPENING — ६५० ॥ प्रणम्याप्तविदं गुरुं श्रीदेववर्द्धनम् ।
मुग्धबुद्धिप्रबोधार्थमुक्तियुक्तिः प्रतन्यते ॥१॥

CLOSING — द्विधोक्तिः प्रष्ठ(प्रक्ष)रा १ वक्ता २ प्रक्षरा कर्तरि स्मृता ।
वक्ता कर्मणि भावे च धातोः साप्या १ दनाय्यतः(?)॥२॥

मुनिगगनशरेन्दु १५०० मिते वर्षे हर्षेण सिद्धपुरनगरे ।
प्राथमिकस्मृतिहेतोर्विहितो वाक्यप्रकाशोऽयम् ॥२४॥

COLOPHON & Post-colophonic — इति वाक्यप्रकाशाभिधं मौक्तिकं समाप्तम् ।छ। ग. करमसी लिखितं ।

गन्धर्व मंदिरे ॥छ॥

## 6844. शब्दसिन्धुः

OPENING — श्रीगणेशाय नमः ।

प्रणम्य परमानन्दं बालव्युत्पत्तिसिद्धये ।
शब्दसिन्धुं प्रवक्ष्येहं स्वल्पं सद्ग्रंथनायकम् ॥१॥

तत्र प्रथमं स्वरसमानसंज्ञा संव्यवहाराय संगृह्यते । अ, इ, उ, ऋ, लृसमानाः प्रत्याहारे वर्णाः गण्यते । ते च समानसंज्ञाः स्युः । तेषु सधिः स्यात् । समानवचने, अन्यप्रयोगषु(सि)द्धये ह्रस्वदीर्घप्लुतभेदादन्योन्य सवर्णो स्यात् ।

CLOSING — .........न शब्दनिर्देशो तदिदं चादिशब्दरूपं अव्ययसज्ञकः स्यात् । अव्ययानां च लिंगादिनियमो न । उक्तं हि-सदृशं त्रिषु लिंगेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्नव्येति तदव्ययम् ॥१॥ उक्तान्यलिंगान्यव्ययानि । अधुना स्त्रीप्रत्ययानाह ।

## 6967. धातुपाठः

OPENING — (कारिकारूपः)

॥६०॥ भूवादयो धातवः । उपदेशेऽजनुनासिक इत् । दूरे उपसंख्यानं, हलन्त्यं । न विभक्तौ तु स्माः । आदिर्ञिटुडवः । षःप्रत्ययस्य । चूटू । लशक्वतद्धिते । तस्य लोपः । यथासंख्यमनुदेशः समान । स्वरितेनाधिकारः ।

CLOSING

सस्यकः साष्वसं संकः सूकः सारसनं तथा ।
प्रमादंस्यद्वयोपेता ऊष्मलोद्भवदर्थिताः ।

COLOPHON

इत्यूष्मभेदः कृतिरियं श्रीमहेश्वरकवेः ।

Post-Colophonic

लिपिरियं श्रीमविजयमुनेः ।। चिरं जीयादिदम् ।।
सारंगो विष्णुराख्यातः सारंगो जय उच्यते ।
सारगः खजनः प्रोक्तः सारंगो वारिधिः स्मृतः ।।३।।

## 6877. व्याकरणशब्दसाधना

OPENING

।।६०।। सारस्वतनीर्थं व्याकरणमिदं च तृतीयवृत्तेः एषु साधनार्हान् ।
क्रमेणात्र लिखेच्छब्दान् । ज्ञानप्रदंश्रीगुरुनाममत्रात् ।।

CLOSING

धीरेण जीवाद्र् चिनेत्यलेखि भुजिष्यशिष्यप्रतिमादिहेतवे ।
.................... विशोधनीया च कवीन्द्रराजिभिः ।।

COLOPHON & Post-colophonic

व्याकरणशब्दसाधना सम्पूर्णा ।। सं० १८२१ ना चैत सुद २ दिने लिषित्यपरं सकलपंक्ति श्री १०८ श्रीराजन्यसागरगणीशिष्य रत्नसागरलिपिकृत प्राश्रमीया मध्ये श्रीशितलनाथप्रसादात् ।।१।।

## 6882. शब्दसंचयः

OPENING

।।६०।। महोपाध्याय श्रीशांतिचन्द्रगणिगुरुभ्यो नमः ।।

+ + +

..... शिष्यप्रबोधाय लिख्यते शब्दसचयः ।।१।।
देवहाहामुनिग्रामणीसाधुखलप्रमुखाः ।
पितृयुजुपक्कलाद्याद्योसोरेगौरिग्लैरिवो नरे ।।२।।

तत् प्रथममकारान्ताः-देववृक्षनरव्याघ्रसिंहशार्दूलवायसाः ।
.............. प्रासादलकुटस्त लघ्न कुंजरनायकाः ।।१।।

COLOPHON & Post-colophonic

योधपुरपतिरायमालबेभ्रातृव्यसहस्रमल्लराज्ञः पुरः पत्रावलम्बनपुरःसरं क्षपणाकभट्टारकगुणचंद्रजयिनां इद प्रकारकप्रवचनप्रस्तावनामुत्सर्पणविधिवेधसां महोपाध्यायश्रीशांतिचंद्रगणिपादानां चरणाम्बुजभृंगायमानमुनिलालचन्द्रेणाऽलेखि ।।छ।। मुनिलालचन्द्रपठनार्थं ।। शुभं भवतु ।।छ । कल्याणमस्तु । छ।। श्रीरस्तु ।।

## 6957. अमरकोशः सटीकः

COLOPHON

।। श्रीगणेशाय नमः ।।

कोशस्येतन्महीपानां कोशस्य विदुषामपि ।
उपयोगो महान्यस्मात् क्लेशस्तेन विना भवेत् ।।१।।

गोमान्तकप्रान्तजुषा श्रीमहेश्वरशर्मणा ।
कृता टीकाऽमरे कोशे संक्षिप्तार्थसुबोधिनी ॥

(टीकाकर्तुः)

यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः।
सेव्यतामक्षयो धीराः स श्रिये चामृताय च ॥१॥

CLOSING

षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम् ।
परं विरोधे शेष तु ज्ञेय शिष्टप्रयोगतः ॥४६॥

COLOPHON

इति लिंगादिसंग्रहवर्गः ।
इत्यमरसिंहकृतौ नामलिंगानुशासने
सामान्यकाण्डस्तृतीयः साग एव समर्थितः ॥४७॥

Post-Colophonic

सम्वत् १६१५ मिति माघकृष्णा १२ ग्रमुकवारे आत्मपठनार्थं ग्रंन्थाते मंगलमाचरणीयं श्रीमच्चन्द्रगणेशाय नमः बुधालिखितम् ॥

## 6959. एकाक्षरकोशः

(शेषनाममाला वा)

OPENING

इदं— प्रणिपत्यार्हतः सिद्धसांगशब्दानुशासनम् ।
शेषाख्यनाममालाया नामानि प्रतनोम्यहम् ॥१॥

CLOSING

क्षा क्षी क्षमाया निद्रायां क्ष वा क्षत्ररक्षसोः ।
अप्राचुर्यगस्य(अप्रागुच्चार्यशब्दस्य)लिंग क्वचिदुपेक्षितम् ॥७६॥

यकाराक्षरेषु शब्देषु तदूह्यं लक्ष्यवादिभिः ।

COLOPHON

इति जगदुपकारिण्यां मिरुप(प) दंडाधिनाथरचितायां एकाक्षरकाडोऽयं संपूर्णो नाम चरित्रमालायाम् ॥

## 6998. छन्दस्तवम्

OPENING

नत्वा हृदि महावीरं सर्वज्ञ त्रिजगद्गुरुम् ।
आर्यादीनां रूपसंख्यां प्रस्तारादीनामह ब्रुवे ॥१॥

सर्वातिगुरुमध्यादि गुरुश्चतुष्कला सिद्धा ।
चतुर्मात्रगणाः पंच स्युरार्यादिषु सस्मृताः ॥२॥

CLOSING

इति छदःशास्त्रमूत्रम् । छ॥ स्वस्ति ॥

[मस्त्रि]गुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः ।
जो गुरुमध्यगतो रल मध्यः सोऽतगुरुः कथितोऽतलघुश्च ॥१॥

मात्राभिः (मो भूमिः) श्रियमातनोति य जल वृद्धि र वह्नि मृतिम् ।
सो वायुः परदूरदेशगमनं त त्योम शून्य फलम् ।
यः सूर्यो रुजमादधाति च पुनर्न दुर्यशो निर्म्मलम् ।
नो नाकः सुखमच्युत फलमिदं प्राहुर्गणानां बुधाः ॥ श्री॥

## 7002. पिङ्गलछन्दो मिताक्षराव्याख्योपेतम्

OPENING

अथ नियताक्षरपादान्यक्षरच्छन्दांसि निरूपयति । चतुःशतमुत्कृतिः ।।१।।
चतुरधिक शत चतुःशतं मध्यमपदलोपी समासोऽत्र । चतुःशतं च उत्कृतिसंज्ञं छन्दः चतुरश्चतुरस्त्यजेदुत्कृतेः ।

प्रज्ञां प्राप्य ऋतंभरां भगवतो भर्गाच्चिराराधिता-
देतत्प्रातिभवेदनेन कथित योगान्तरा ये मया ।
तस्मात् सुष्ठु विचार्यमेतदखिलं कार्योऽत्र नो मत्सरः
प्राज्ञाः सम्मनने कृते यदि भवेद्दोषस्तदा कथ्यताम् ।।४।।

शैलाग्नीभामहीमितेषु गतवत्स्वब्देषु भूमीपतेः,
राज्याद्विक्रमनामकस्य तपसः पक्षे वलक्षे शुभे ।
सद्वृन्दावनपत्तने विरचिता व्याख्यासु सख्यावता-
मेषाऽऽकल्पमनल्पमेव दिशतान्मोद शिवानुग्रहात् । ५।।

COLOPHON & Post-Colophonic

इति मिश्र जगन्नाथकृतायामाचार्यपिंगलप्रणीतच्छन्दःसूत्रव्याख्यायामष्टमोऽध्यायः ।
संवत् १८३९ मार्ग सुदी १३ ।

## 7004. पिङ्गलसार:

OPENING

श्रीगणेशाय नमः ।

गोकुलवधूमुखाम्बुजविकाशमार्त्तण्डमण्डलं किमपि ।
अतिकठिन मम मानसमुदयाद्रिमिव प्रकाशयतु ।।१।।

आदौ मात्रावर्णप्रस्तारज्ञानार्थं मात्राप्रस्तारमुत्पादयति, द्वाभ्यां षट् पचेति टगणः, षट्कलः ठगणः, मगणश्चतुष्कलः, डगणस्त्रिकलः, णगणो द्विकलः, एताः पचगणाना मात्राः कलाशब्दवाच्याः, एतेषां भेदानाह विश्व त्रयोदश, वसुशब्देनाष्टौ, पंच अग्निशब्देन त्रयः, द्वौ इति प्रस्तारे यथासख्य भेदा भवति। प्रस्तारक्रममेवाह दद्यादिति, मात्राप्रस्तारे आद्य गुरोरधःस्थाने लघु दद्यात् अग्रे च पंक्तिसमान गुरुलघवो देयाः, अवशिष्टाश्च कलाः पश्चाद्देयाः, यथा षट्कलप्रस्तारे आद्यं गुरुत्रयात्मक रूपं भवति ।

।।६०।। षट् पच चतुस्त्रिद्विप्रमिताष्टठडढणा पंचगणमात्राः ।
विश्वेवसुपंचाग्निद्वाविति भेदाः क्रमेण विस्तारे ।।१।।

CLOSING

षट्पंचपंक्तियुगलोद्भूताकैः पूरयत सुधियः ।
षट्पंक्तिभिरेव स्यान्मात्राणां मर्कटी कठिना । २४।।

प्रस्तारज्ञानार्थं कौतुकहेतोश्च निखिलसुधियाम ।
मेरुपताकादीनां लक्षणमुक्त समासेन ।।२५।।

COLOPHON

इति हरिप्रसादोन्नीते पिंगलसारे नष्टोद्दिष्टादिलक्षणं समाप्तम् ।

## 7007. प्राकृतपैङ्गलम्पिङ्गलप्रदीपटीकोपेतम्

OPENING

॥ श्रीगणेशाय नमः ॥

गोपीपीनपयोधरद्वयमिलच्चेलाञ्चलाकर्षणा-
च्छेलिव्यापृतचारुचञ्चलकराम्भोजव्रजत्कानने ।
द्राक्षामञ्जुलमाधुरीपरिणमद्वाचि भ्रमं तन्मता-
गद्वैतं समुपास्महे यदुकुलालम्बं विचित्रं महः ॥१॥

CLOSING

…एतानि पंचचत्वारिंशत् स्थानकानि अन्यान्यपि प्रस्तारगत्या स्वबुध्या सुधीभिरूह्यानि छंदांसीत्युपरम्यते ।

COLOPHON & Post-Colophonic

इति 'पिंगलाचार्यविरचितमात्रावृत्तप्रकाशकम् । छन्दःप्रदीपममलं जगद्भुवनदीपकम् मुनीषुरसभूमीभिर्मितेऽब्दे श्रावणे सिते । नागराजतिथौ भट्टलक्ष्मीनाथो व्यरीरचत्, इत्यालंकारिकचक्रचूडामणिश्रीमद्रायभट्टात्मजश्रीलक्ष्मनीनाथभट्टविरचिते पिंगलप्रदीपे मात्रावृत्ताख्यः प्रथम. परिच्छेदः स० १८६५ पौ० शु० ७ रवीवार ॥

## 7023. वृत्तरत्नावली

OPENING

॥ श्रीगणेशाय नमः ॥

तमोगुणविनाशिनी सकलकालमुद्योतिनी ।
धरातलविहारिणी जडसमाजविद्वेषिणी ।
कलानिधिसहायिनी लसदलोलसौदामिनी,
मदंतरवलम्बिनी भवतु कापि कादम्बिनी ॥१॥

श्रीगोवर्द्धनभूपनन्दन तव प्रोद्दामवीरस्फुरत्-
संग्रामे यशबन्तसिंहमहिमारभातिसंभाविनाम् ।
सद्यश्छिन्नकबन्धगव(…)णाल्लब्धारामरामोदिता (?)
सा चण्डी सह योगिनीभिरभितः संबढयत्याशिषा ॥२॥

CLOSING

मात्राप्रस्तारकरणे लघुराद्यगुरोरधः
यथोपरि तथैवाधो दक्षे वामे गुरुर्लघुः ॥८५॥

पूर्वयुग्मसमानांकान्मात्रासु क्रमतो न्यसेत् ।
मात्राप्रस्तारसङ्ख्या स्यादतिमांकेन समिता ॥८६॥

तत्रादौ गाथा—पादे द्वादश विषमे मात्राश्चाष्टादश द्वितीये हि—

( Incomplete )

## 7040 अभिधावृत्तिमातृका

OPENING

तस्माम्मुखमिव मुख्य इति शाखादि यदंतेन मुख्यशब्देनाभिधीयते । तस्योदाहरणम्-गौरनुबन्ध्य इति, अत्र गोशब्दव्यापाराद्यागसाधनभूता गोत्वलक्षणा जातिरवगम्यते तत-

स्तस्या मुख्यता तदेवं शब्दव्यापारगम्यो मुख्योऽर्थः । यस्य तु शब्दव्यापारावगम्यार्थपर्य्यालोचनयाऽवगतिस्तस्य लाक्षणिकत्वं यथा पूर्वस्मिन्नेवोदाहरणे व्यक्तिः सहितशब्दव्यापारादवसीयते 'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे' । ..........

CLOSING

......एतेषु पदवाक्यप्रमाणशास्त्रेषु चतुर्वर्गोपयोगिसर्वविद्याधिगमोपायभूतेषु प्रविभज्यमानेषु संक्रान्त निरूपितस्वरूपप्रतिबिम्बं दशविधमभिधावृत्तमः साहित्यादौ सकललोकव्यवहारदर्पणप्रख्ये संचारयति स वा विक्रमेण प्रसीदन्त्व वाग्गीश्वरो भवति दशविधेनानेनाभिधावृत्तेन समग्रस्य वाक्परिस्पन्दस्य व्याप्तत्वात् । अनेन व्याकरणमीमांसा तर्कसाहित्यात्मकेषु चतुर्षु शास्त्रेषूपयोगात्तद्द्वारेण च सर्वासु विद्यासु सकलव्यवहारमूलभूतासंप्रसरणादस्य दशविधस्याभिधावृत्तस्य सकलव्यवहारव्यापित्वमाख्यातम् ।

भट्टकल्लटपुत्रेण मुकुलेन निरूपिता ।
सूरिप्रबोधनायेयमभिधावृत्तिमातृका ॥

COLOPHON

इति श्रीशारदाचरणरजःकणपवित्रितस्थलवास्तव्य*भट्टकल्लटात्मजभट्टमुकुलविरचिताऽभिधावृत्तिमातृका समाप्ता ।

*Mukuls' father Kallata was a court-poet of King Avantivarman of Kashmir (855-884 A D)

## 7042· अलङ्कारकौस्तुभः सटीकः

OPENING

श्रीकृष्णचैतन्याय नमः ।

अथारंभे स्वाभीष्टदेवतानामगुणकीर्त्तनात्मकं मंगलमंगीकुर्वन् ग्रंथकारो ग्रंथस्य निर्विघ्न समाप्तिमाशास्ते ।

स्वानंदरससतृष्णः कृष्णश्चैतन्यविग्रहो जयति ।
आपामरमपि कृपया सुधया स्नपयांबभूव भूमौ यः ॥

\+ \+ \+ \+

CLOSING

जयतिरत्राकर्मकः सर्वोत्कर्षवचनः तेन नमस्कारो व्यज्यते । स्वापकर्षबोधानुकूलव्यापारविशेषो नमस्कार इति न्यायात् सर्वोत्कर्षं दर्शयति पदं वैकुण्ठादिस्थान, पदार्थो वस्तुभूतो ब्रह्मानन्दस्म(पदा)न्यामपि अतिशयो तत्र तत्रापि दुर्ल्लभः इत्यर्थः ।

\+ \+ \+ \+

यथा—निर्वाणनिबरसमेव विदन्तु केचिद् भव्या न ते रसविशेषविदो वयं तु ।
श्यामामृतं मदनमथरगोपरामानेत्राजलीचुलुकितावसितं पिबामः ॥

अत्र पूर्वार्द्धे शान्तः परार्धे शृङ्गारस्तथापि शुद्धशान्तस्य. ...कृतत्वात् शृंगारएव पुष्टः । प्रागुक्तलक्षणस्य रसस्यानन्दस्वरूपत्वेन प्रतिपादिते चैकरसस्य रसेन विरोध इति यदिह प्रतिपाद्यते तत्तु सामग्रीभूतस्य स्थाय्यादेरेव न तु रसस्य इत्यलंकारकौस्तुभे दोषप्रदर्शनो नाम दशमकिरणः ।

COLOPHON

श्रीमत: कर्णपूरस्य चरणावनिशं भजे ।
निर्मितः कृष्णकंठाहों येनालंकारकौस्तुभः ।।

अलंकार कौस्तुभ: समाप्त: ।

Post-Colophonic

वि० सं० १६५४ पौ० कृ० १४ बुध:

## 7043. अलङ्काररत्नाकर:

OPENING

ॐ नम: सरस्वत्यै ॥

ॐ सुरासुरशिरोरत्नमरीचिखचिताङ्घ्रये ।
विघ्नान्धकारसूर्याय गणाधिपतये नम: ॥

आमुखैकार्थपदं पुनरुक्तवदाभासम् अर्थस्यैव तुल्यतोपादानाद् पभेद: पदयोरर्थात प्रतीयते अन्यथा यमकाद्भेदो न स्यात् । × × × ×

CLOSING

....... प्रस्तुतप्रशसाया: श्लेषमूलातिशयोक्तिगर्भो गोविन्दात्प्रियाया व्यतिरेक: तथा च अकवलितवचनन गर्वोत्पत्तिदर्शनेन दर्शितव्याप्तिकात्रिवलिबन्धेऽपि न गर्वोत्पत्तिरित्यनुक्तनिमित्ता विशेषोक्ति: । यद्यपि चात्र शब्देन वृत्तिर्न प्राधान्यात् विशेषोक्तोरेव ।अयार्थीभावस्तथापि प्रस्तुतवस्तुप्रतिपादनतात्पर्येण वाक्यप्रवृत्त्या सामर्थ्यावसिताया अप्रस्तुतप्रशसाया मुख्यतेति प्रदर्शितव्याप्तिकाविशेषोक्तिपरिपोषकृदित्येव ज्याय: ।

COLOPHON

समाप्तोऽयमलंकार:

Post-Colophonic

कृतिर्महोपाध्यायभट्टत्रयीश्वरमिश्रपुत्रस्य तत्रभवत: पंडितभट्टश्रीशोभाकरमिश्रस्य । 'श्रीशिवशर्मपुत्रेण प्रज्ञालववता मया । रत्नाकराभिध: पोथेऽलकारो लिखित: शुभम् ।'

## 7044. अलङ्कारविमर्शिनी

OPENING

श्रीकृष्णाय नम. ।

ॐ स्तां निजेति परकीयाना सूत्राणां तात्पर्यकथनेनावबोधोऽपि स्यादिति भाव: तथा न कैश्चिदपि परैरीदृशि सूत्राणि कृतानीत्यपि ध्वनितम् तात्पर्यमिति सक्षिप्तार्थप्रकाशनमित्यर्थ ; अन्यथा हि कथनमेषां बहुनापि ग्रन्थेन एषां बहुनापि ग्रथेन पारं न यायात् । नन्वादिवाक्यं प्रयोक्तव्यमभिधेयप्रयोजने प्रतिप दयितुं श्रोतृप्रवरोत्साहसिद्धये इति नीत्या श्रोतृप्रवृत्त्यर्थं सर्वत्रवादिवाक्येभिधेयप्रयोजनाद्यभिधीयते तच्चेह नोक्तमिति कथमत्र श्रोतृप्रवृत्ति: स्यात्, मैव, अलंकाराद्यत्राभिधेया: तेषामत्र साक्षादेवाभिधायकं चेदिदमलकारसर्वस्वाख्य प्रकरणमित्यभिधाभिधेययोर्नियमगर्भीकारणार्थक्षिप्तो वाच्यवाचकभावलक्षण: सबंध:; नह्येवंविधमेतदभिधायक प्रकरणान्तरमस्ति तस्यान्विष्यमानस्याप्युपलभयोग्यस्यानुपलभत्वात् अत एवात्र अलंकारग्रंथवैलक्षण्यो······ तात्पर्यमुच्यते... .....

CLOSING
"'एतच्चोद्भटविवेके राजान[क]तिलकेन सप्रपंचमुक्तमिति ग्रंथविस्तरभयात्त्विहास्माभिः प्रपंचितं एतदेवोपसंहरति तस्मादित्यादि-प्राश्रयाश्रयिभावेनेति, उपस्कार्योपस्कारकभावेनेत्यर्थः, तेन योऽलकारो यदुपस्कारः स तदलकार इति पिंडार्थः, चिरंतनत्वेनानेनास्माभिः सर्वत्रैव तन्मतानुसृतिरेव कृतेत्यास्मविषयमनोद्धत्यमपि प्रथकृता प्रकाशितमिति

COLOPHON
शिवम् ।

राजराज इति भूभृतामभूदग्रणीर्गुणिगणाश्रयः परम् ।
तां सती सरसि राजहंसतामातनोत्किल घनागमेऽपि यः ॥

शक्राधिकश्रियस्तस्य श्रीशृंगार इति श्रुतः ।
गुणातिक्रांतधिषणो मंत्रिणामग्रणीरभूत् ॥
तदात्मजन्मा वैदग्ध्यबंधुर्जयरथाभिध. ।
व्यधादिदमसामान्यं श्रवणाभरणं सताम् ॥

यन्नाम किंचिदिह सम्यगथान्यथा वा,
साक्षादलंकृतिनयोचितमेतदुक्तम् ।
विद्वद्भिरेषमपसार्य बुधैः क्षणस्य,
तत्रावधेऽप्यमियतैव वयं कृतार्था. ॥

परिपूर्णेयमलंकारविमर्शिनी समाप्ताः ।

Post-Colophonic
श्रीः सं० १६४५ श्रा० शु० १५ सोमवार ।

## 7060. काव्यभूषणम्

OPENING
॥ ॐ श्रीमद्गणपतये नमः

हेरम्बस्य कपोलसीम्नि मलिनां मालामलीनां घना-
मालोक्य प्रतिबिम्बितां हरशिरोगंगातरंगोपरि ।
न्यस्तानेन कलिंदजापि शिरसीतीर्ष्याकुलाया मरुद्-
वल्गत्कोकनदच्छदद्युतिभृतो देव्या दृशः पांतु वः ॥१ ।

श्रीकृष्णे सत्यभामाकुचकलशभुवि स्फीतमातंगकुंभो-
त्तुंगायां पारिजातस्रजमुपनयति प्रेमभाजा करेण ।
तस्मिन्जंमाभिभासि द्विरदकरधिया विस्मृतेर्ष्यारसाया
रुक्मिण्याः क्लांतमुग्धावलिललितरुचः पांतु दृग्भंगयो वः ॥२॥

CLOSING
अर्द्धेन्दुक्षतमङ्कितस्तत्कृतप्रस्थानकस्यांशुकं,
विश्लिष्टावरणं रदव्रणगणैः साबाधबिंबाधरम्
स्वेदांभःपृषताभिमृष्टतिलकं स्रस्तोरुयुग्मं जय-
त्यामीलन्नयनांचलं परिगलद्धम्मिल्लकं तद्वपुः ॥१०२॥

विद्वद्वृंदकमौलिभूषणलसत्पांडित्यलीलांचित-
श्रीमच्छ्रीधरभट्टसूनुरमलप्रज्ञाधराराधितः ।

भट्टश्रीयुतकृष्णवल्लभसुधीर्वर्षेशरेभ्वद्रुभू-
माने (१८५५) काव्यविभूषणाभिधमिदं काव्यं व्यधादद्भुतम् ॥१०१॥

COLOPHON

इति श्रीकृष्णवल्लभभट्टकृत काव्यभूषणं समाप्तम् ॥

## 7070. कृष्णरसविलास:

OPENING

॥६०॥ स्वस्ति श्रीगणपतये नमः ॥ श्रीकृष्णाय नमः ॥

सर्वसारैकसाराय वृन्दावनविहारिणे
सर्ववेदैकवेद्याय ब्रह्मणे हरये नमः ॥१॥

श्रीधरं श्रीधरानंदं तुरीयस्थं तुरीयकं ।
तत्त्वज्ञानां शिरोरत्नं नमामि गुरुमीश्वरम् ॥२॥

CLOSING

प्रसादमेव तावक हरे सभेऽत्र यामुने
तटे हरिं हरिं रटन्ममापि जीवना वधि ।

इति प्रार्थनं भगवति श्रीकृष्णे ॥ शुभमस्तु ।

राधाकृष्णविलासरासरचना प्रज्ञानुसारा कृता,
सेयं श्रीहरिभक्तिरक्तमनसामगीकृताऽस्तु ध्रुवम् ।
जीवन्मुक्तविरक्तरक्तविषयास्तैः सम्मता संततं,
मंदास्तेऽनधिकारिणः कुमतयः श्रोतुं न श्रद्धालयाः ॥

COLOPHON

इति कृष्णरसविलासः सांगं पूर्णतां यातः । शुभं ।

Post-colophonic

संवत्सरे धृतिमुनीन्द्र (१७१८) मिते शुभेब्दे-
प्यूर्जे वरे व्यरचि कृष्णविलास एषः ।
यद्वैष्णवाः कृतिनि एव पठंतु नित्यं,
कृष्णे मतिर्भवतु येऽत्र रतास्तु तेषाम् ॥

## 7074. पुराणोक्तश्लोकानुसारिचित्ररूपम्

OPENING

॥ श्रीगोविन्दो जयति ॥

पाद्मे पातालखण्डे द्वितीयाध्याये—गोपकन्या

मनोहरा मुग्धवेशा किशोरी वयसोज्ज्वला ।
अग्रे तन्मानसी धन्या गोपकन्याः सहस्रशः ॥
शुद्धकांचनपुंजाभाः सुप्रसन्नाः सुलोचनाः ।

These are illuminating paintings as under :—

1. चित्ररूपम् from आदिपुराण
2. सुदेवीरूपम् ,, ,,
3. इंदुलेखारूपम् ,, ,,
4. वाससज्जारूपम् ,, ,,

## 7075. नायिकावर्णनम्

**OPENING**

।। श्रीगणेशाय नमः ।।

श्रीराधाचरणांभोजभ्रमरीकृतमानसः ।
शुभाय भवतां कृष्णो भवतां कीर्तिसम्पदे । १।।
निखिलेषु रसेष्वेषु बालानां बुद्धिसिद्धये ।
नायिकावर्णनं किञ्चित्क्रियते रामशर्मणा ।।२।।

**CLOSING**

यथामति कृतं किञ्चिद्वर्णनं सुभ्रुवामिह ।
नयिकानामिदं लोके सन्तोषं कुरुतात्सदा ।।४६।।

**COLOPHON**

इति श्रीरामकवीन्द्रविरचित नायिकावर्णनं समाप्तम् ।।

## 7080. रसतरङ्गिणीटीका 'सेतुबन्धाभिधा'

**OPENING**
(On of 62a)

·········त्वस्य सुखेन सम्भवादिति नात्रेह कष्टानुभवो मानाभावादिति भाव-सामान्यतो रसस्योदाहरणं त्वस्यावधेयम् ।

स्वेदादीन् वहसे धृतिस्मृतिमतिप्रख्यान् पुनर्गाहसे,
दृष्ट्वालोकमिमं मुहुर्बहुविधं संतक्यं किं ध्यायसे ।
बाह्याभ्यंतरतः स्वतोऽपि परतः कस्मात्समो राजसे,
दृष्टादृष्टविधो विवेकविधुरः किं नासि नो भाषसे ।।·········

**CLOSING**
(on f. 329

·······तत्र स्वतः प्रधानस्य भेदद्वयमुररीकृत्योभयोः स्वरूपं प्रदर्शयति भावविभावे-त्यादिकष्टावगमो विमुख इत्यतेन । उभयत्र भावा व्यभिचारभावाः । व्यवर्तकशक्तिलक्षणा व्यञ्जनाऽन्यतमव्यापारेण यथोचितं प्रतिपादितैः अनुक्तत्वान्निरुक्तविषयाऽप्रतिपादित-त्वात् । पूर्वो यथा—

वैषम्यं श्रुतिपंकजात्प्रकटयत्यानदनीरं दृशोः,
स्वर्णालंकरणाद्व्यनक्ति पुलको वैषम्यमंगश्रियः ।
तस्या नूपुरपद्मरागमहसः पादारविन्द·········

( Incomplete )

## 7087. रसरत्नहारो लक्ष्मीविहारटीकायुक्तः

**OPENING**

श्रीगणेशाय नमः ।

सीताकराब्जमृदुलालितपादपद्म-
स्तस्या मुखं जलजसुन्दरमीक्षमाणः ।
रत्यन्वितस्य मदनस्य रुचिं दधानः
श्रीमान् रघुप्रभववंशपतिर्विर(रे)जे ।।१।।

ग्रन्थादौ कृतं मंगलं शिष्यशिक्षार्थं निबध्नाति निरीक्ष्येति । विष्णोश्चरणारविन्द-नखेषु स्वीय मतिबिंब निरीक्ष्य दशावतारावपि अस्मात् विष्णोः स्वाधिकं मन्यमाना लक्ष्मीः विदुषां सुखाय साकल्येन स्तात् भवतु, विष्णोः पादसेवनं कुर्वाणा लक्ष्मीः । पादनखेषु दशसु स्वीयं प्रतिबिंब ईक्षमणा एकादशीमात्मां ज्ञात्वा विष्णोरधिका-संमन्यमानेति भावः, स्त्रीस्वभावादि परयेव धीः समुत्पन्ना न साम्यपर्यन्त, यद्वा भगवता तिर्यगादिषु योनिषु जन्म विडंबयता दशावतारता सपादिता मया तु वक्षस्थलस्थितयैव स्वरूपादप्रच्युतया चेति । स्वामधिकां मन्यमानति भावः ।

CLOSING

रुधिरांत्रकीकसवसामांसादिविभावः क्षोभणो बीभत्सः ।

यथा—

अंत्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कंकण-
प्रेंखद्भूरिविभूषणारवभरैराघोषयत्यंबरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारबंधुरवपुर्वद्धादरं धावति ।।

रम्येष्वपि रमणीयजघनस्तनादिषु वैराग्याद्घृणायुक्तो बीभत्सो यथा—

लालावक्त्रासवं वेत्ति मांसपिण्डौ पयोधरौ ।
मांसास्थिकूटं जघन जनः कामग्रहातुरः ।।

न चायं शांत एव विरक्तोक्तेर्यतो बीभत्समानो विरज्यते ।।१८।।

सम्यगिति—इदं वाग्भटालंकाररीत्या; काव्यप्रकाशे तु 'निर्वेदस्थायिभावोऽस्ति शांतोऽपि नवमो रसः । दशरूपके तु 'रत्युत्साहजुगुप्साः क्रोधो हासः स्मयो भयं शोकः । शममपि केचित् प्राहुः पुष्टि नाट्येषु तस्येति' । अत एवोक्त मूले काव्य इति ।

कश्चित्सदम्भो दभोलिसदृशं वक्ति चेद्वचः ।
तथापि नैति विकृति शान्तः सागरधीरधीः

जगतीति शतात्परे परः । परः शताद्यास्ते येषां परा संख्या शतादिकात् इत्यमरः । ननु इति चायमलकारे अगुरुतमा रचना अत्रुबबुद्धये बालबोधाय ।

COLOPHON इतिश्रीशिवरामत्रिपाठीकृतो लक्ष्मीविहारः समाप्तिमगात् शुभम् । संवत्सर १९४४

## 7091. वाग्भटालङ्कारवृत्तिः

OPENING

ॐ श्रीस्वात्मने गुरवे शिवायों नमः ।

ॐ भक्तिनिर्जरमानम्य श्रीवीरचरणाम्बुजम् ।
वाग्भटालकृतेर्वक्ष्ये समासान्वयटिप्पणम् ।।१।।

श्रियमिति । श्रीनाभेयजिनो व इति युष्मभ्यं श्रियं लक्ष्मी ददातु; नाभेरपत्यं नाभेयः श्रीमांश्चासौ नाभेयश्च श्रीनाभेयः श्रीनाभेयश्चासौ जिनश्च श्रीनाभेयजिनः, कदा सदा-सर्वदा, सः कः यदागमपद्मावली सतां साधुना मोक्षमार्गं ब्रूते । यस्य नाभेयस्य आगम-

पदानि आगमशास्त्रवचनानि पदागमपदानि तेषामावली श्रेणिः पदागमपदावली, कथंभूतो नाभेयः देवः, दीव्यतीति देवः प्रानदी, तथा यस्यालंदकत्तु रागमपदावली सतां मोक्षमार्गं ब्रूते सूचयति ॥१॥

साब्धिति ॥२॥ इत्थंभूतं वाक्यं कुर्व्वीत, कस्यै कीर्त्तये इत्थं कथं साधुशब्दार्थ-सन्दर्भो रचनायाः स्मितं साधुशब्दार्थसंदर्भं जिनेन्द्राणामागमपदावलीपदं मोक्ष-इत्यर्थः ।

CLOSING

बीभत्सः स्याज्जुगुप्सातः साहसश्रवणेक्षणात् ।
निष्ठीवनास्यभगादि स्यादत्र महतां न च ॥३३॥

सम्यग्ज्ञातसमुत्थानः शान्तो निस्पृहनायकः ।
रागद्वेषपरित्यागात्सम्यग्ज्ञानस्य चोद्भवाः ॥३४॥

दोषैरुज्झितमाश्रितं गुणगणैश्चेतश्चमत्कारिणं,
नानालंकृतिभिः परीतमभितो रीत्या स्फुरन्त्या सताम् ।
तैस्तैस्तन्मयतां गत नवरसैराकल्पकाल कवि-
स्रष्टारो रचयंतु काव्यपुरुषं सारस्वताध्यायिनः ॥३५॥

COLOPHON

इति श्रीवाग्भटालंकारे पंचमः परिच्छेदः ।

अथ च रागद्वेषपरित्यागात् सम्यग्ज्ञातोऽस्योद्भवो भवति ३४ दोषैरिति ।

क्षेमहंसगणेः साधोरियं कृतिरनुत्तरा ।
वाग्भटालंकारे सा[त्तात्] सर्वजनप्रिया ३५

इति वाग्भटालंकारे समासान्वयटिप्पणे वा हेमगणिविरचिते पंचमः परिच्छेदः समाप्तः ॥

## 7092. वाग्भटालङ्कारः सटीकः

OPENING

॥ श्रीहेरंबगुरुभ्यां नमः ॥

श्रीवर्द्धमानजिनपतिरनंतविज्ञानसंततिर्जयति ।
यद्वचीःप्रदीपकलिका कलिकालतमः शमं नयति ॥१॥

वाग्भटकवीन्द्ररचितालंकृतिसूत्राणि किमपि विवृणोमि ।
मुग्धजनबोधहेतोः स्वस्य स्मृतिजालहृद्यर्थं च ॥२॥

इह शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्त्तमाना अभीष्टदेवतानमस्कारपूर्वकमेव प्रवर्त्तंते इति शिष्टसमयपरिपालनाय तथा 'श्रेयांसि बहुविघ्नानि भवंति महतामपि । अश्रेयसि प्रवृत्तानां क्वापि यांति विनायकाः, इति वचनात्, माभूदस्य शास्त्रकाव्यार्थिनां सम्यक्-ज्ञानोपदेशकतया श्रेयोभूतस्य कोऽपि विघ्न इति विघ्नोपशान्तये च शास्त्रारंभे अभीष्ट-देवतानमस्कारं महाकविः श्रीवाग्भटः प्रकटयति..............................

श्रियं दिशतु वो देवः श्रीनाभेयजिनः सदा
मोक्षमार्गं सतां ब्रूते यदागमपदावली ॥१॥

CLOSING

दोषैरुज्झितमाश्रितं गुणगणैश्चेतश्चमत्कारिणं,
नानालंकृतिभिः परीतमभितो रीत्या स्फुरंत्या सतां ।
तैस्तैस्तन्मयतां गतं नवरसैराकल्पकालं कवि-
स्रष्टारो घटयतु काव्यपुरुषं सारस्वताध्यायिनः ॥३२॥

COLOPHON

इति वाग्भटालंकारे रसनिरूपणं पंचमः परिच्छेदः समाप्तो ग्रंथः ॥

## 7105. सारसंग्रहः

OPENING

॥ श्रीगणेशायनमः ॥ अथ मंगलाचरणम् ॥

सानन्दं नंदिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसंकोचभाजि ।
गडोड्डीनालिमालामुखरितककुभस्तांडवे शूलपाणे-
र्वैनायक्यश्चिरं वो वदनविधुतयः पांतु चीत्कारवत्यः ॥१॥
(श्लोकचतुष्टय मंगलाचरणस्य)

अथ नायिकावर्णनम्—

CLOSING

किं नायाति भुजं तगल(भुजङ्गम)भिया किं[च]स्फुरत्स्वर्धुनी-
स्पर्शात: किमु भेत्रवह्निः(नेत्रवह्नि)गरलज्वालाकपालादिहा (ह)।
इथ्थं(त्थ)हृत हरस्य दैववसतश्चिन्ताम्बुधौ मज्जतां,
गौरीव प्रथमागता भगवती निर्मातु शर्माणि च ॥१५६॥

COLOPHON & Post-colophonic

इति श्रीशंभुदासपंडितविरचिते सारसंग्रहे भृङ्गारवर्णनं समाप्तः ॥ छ ॥ श्री ॥
छ ॥ श्री । छ ॥ श्री ॥ छ ॥ श्री ॥ छ ॥ श्री ॥ छ ॥ श्री ॥

श्रीपुरंदरहरिद्वरीकुहरगर्भसुप्तोत्थित-
स्तुषारकरकेसरी गगनकाननं गाहते ।
मयूखनख[सं]त्रुटत्तिमिरकुम्भिकुम्भस्थलो-
च्छलत्तरलतारकाकपटकीर्णमुक्तागणः ॥

छ ॥ श्री ॥ छ ॥ श्री ॥

## 7109. संगीतशिरोमणिः

OPENING

················तो माध्यंन्दिनीं विदुः ॥

पंचमो धैवतश्चैतौ स्वरौ कौथुम(थुम)शाखिनौ
काण्वशाखा निषादस्य स्वरशाखाः क्रमादमू ॥१॥

षड्जो द्वादशवर्षा स्यादृषभः षोडशाब्दिकः ।
वत्सरैः पंचविंशत्या युक्तो गान्धार इष्यते ॥२॥
त्रिंशद्वर्षो मध्यमाख्यः पञ्चमाख्यः स्वरः पुनः ।
पंचत्रिंशद्वत्सरः स्याच्चत्वारिंशत्समुत्कृतः ॥३॥

CLOSING

संगीताम्बुधिमंदरीकृतनिजप्रज्ञैरभिज्ञैर्जगद्-
रक्षार्थं घृतकार्मुकेषुधवल सन्नाहमामुचतः ।
वीरश्रीसुरुताणसाहिनृपतेरादेशतो निर्मिते,
श्रीसंगीतशिरोमणावयमगाद्गीतप्रकाशोद्गमः । छ॥

COLOPHON

इति श्रीसंगीतशिरोमणौ मलिकशार्कश्रीसुल्तानशाहिमलिकाज्ञया नानादेशीयपण्डित-मंडलीविरचिते गीतप्रकाशो नाम प्रथमः परिच्छेदः समाप्तः ॥छ॥

Post-colophonic

स्वस्ति श्रीभूमिग्रामसुमस्थाने महाराजाधिराजश्रीषरगसिंघदेवभुज्यमानराज्ये महाराजाधिराजश्रीषरगसिंघदेव प्रात्मपठनार्थं परोपकारार्थं लिषापित लिखित गौडा-न्वयकायस्थ ठ वेगरायेन ॥ संवत् १५४४ वर्षे भाद्रवदि १० भौमवासरे शुभमस्तु ॥छ॥

## 7183. फाल्गुनमाहात्म्यम्

OPENING

श्रीगणेशाय नमः ।

एकदा सुखमासीनं मन्मथं जगतां पतिम् ।
पप्रच्छ···धर्मिष्ठा सर्वलोकहिते रता ॥१॥
किमत्र सारं संसारे तन्मे वद सुरोत्तम !
किं कर्त्तव्यं जनैः सर्वैरिच्छद्भिः सुखमन्वहम् ॥२॥

CLOSING

धनधान्यधरायुक्तो यशस्वी ज्ञानसंयुतः ।
तपस्वी राज्यपूज्यश्च संहिताश्रवणाद् भवेत् ॥२५॥

COLOPHON

इति श्रीमन्मथसंहितायां फाल्गुनमाहात्म्ये पंचमोध्यायः ॥

समाप्तश्चायं ग्रन्थः, संख्याः ॥१॥ २००

Post-colophonic

जघान्तराले विमले विशाले··················पुरुषस्य किं प्रयोजनम् ॥३॥

इति समाप्तं ।

## 7318. मोरीकल्पः

OPENING

अथ कालां मोरीनुं कल्प टूटक छे ।

पर्यवेक्ष १४ प्रयोग पुरा ने पंहरमो द्वे रसोद्र नक्ष-
यकास उर्ध्व सा सा याति ॥१५॥

हींगलो टांक प्रति अर्क मंथारां २० मिरी १० कूटी गोली चनकप्रमाणः क्रियते भक्षिते षोडकासो याति ॥१६॥

मिरी २१ मृतकोलिक १ नरमूत्रेण गुटिका: क्रियते नेत्रांजन डाकिणीभूतप्रेत याति ॥११॥
मिरीच जीरकं गुलेन गुटिका: क्रियते भक्षिते उदरव्यथा पानीयहरसाइच याति ॥१८।

CLOSING

मीरी चीसोडो संवर्त्य ललाटे दीयते शीषका यति ॥ १६ ॥
तंदुला मिरिचै: सह ललाटे लेपो दीयते शीर्षवेदना याति ॥२०॥
मिरी अजमो कटुक तुंबी भूको अघोल कीजे नास दीजे संनिपातो याति ॥२१॥

COLOPHON

इति मिरीकल्प समाप्तम् ॥

## 7388. वैद्यजीवनं सस्तबकम्

OPENING

दिवाकरप्रसादेन रोगारोग्यप्रमोहया ।
समासेन वयं कुर्म: काव्यं सद्वैद्यजीवनम् ॥३॥

तथापि क्रियते ग्रंथ: सति यद्यपि दुर्जना: ।
नहि दस्युभयाल्लोको दैन्यवानिव वर्तते ॥४॥

CLOSING

नारायणं भजत रे जठरेण युक्ता
नारायणं भजत रे पवनेन युक्ता: ।
नारायण भजत रे भवभीतियुक्ता
नारायणात्परतरं किमपीह नास्ति ॥२३॥

आयुर्वेदवचोविचारसमये धन्वन्तरि: केवलं,
सीमा गानविदा दिवाकरसुधांभोधिप्रियायामापतिः ।
उत्तसं कविताकृता मतिमतां भूभृत्सभाभूषणं,
कान्तोक्त्याऽकृत वैद्यजीवनमिद लोलिम्बराज: कवि: ॥

COLOPHON

इति श्रीमद्दिवाकरसूनुलोलिम्बराजविरचिते वैद्यसंजीवने पंचमो विलास: ।

Post-colophonic

सं० १८३६ चैत्र शु० प्रतिपक्ष शुक्रवार ।

## 7425. रत्नाकरनाममाला

OPENIGN

विषघ्नी हरिता पिंगा दीर्घरक्ता तरंगिणी ।
रजनी रंजनी गौरी मेहघ्नी वर्णयत्यपि ॥

दारुहलदनामगुणा:—

दार्व्वी दारु हरिद्रा च पर्ज्जन्यापहनोति च ।
कटं कटेरी पीता च कटकनी पचपन्ना ।
सैव कालीयक प्रोक्ता तथा कालेयकोऽपि च
पीतद्रुश्चहरिद्रुश्च पीतदारुश्च पीतकं ॥ गुणाद्र ॥

CLOSING

नागवल्यां नागदत्यां नागशब्द: प्रयुज्यते ।
मांसे द्रवे चेक्षुरसे पारदे मधुरादिषु ॥
बो(बा)ले रोगे विषे नीरे रसो नवसु वर्तते ।

COLOPHON — इति श्रीकुवारपरमाणंदविरचितायां रत्नाकरनाममालायां अनेकार्थः वर्गः सम्पूर्णम् ॥

Post-colophonic — शुभं भूयात् सर्वदा संवत् १८०२६ रा श्रावण सुद ५ रविवारे लेखकपाठकयो-रस्तु कल्याणमस्तु ।

## 7428. अश्वचिकित्सागतः

(गुग्गुलुकल्पः)

OPENING — श्रीमन्महागणपतये नमः ।

प्रणम्य शंकरं देवं शंकरं सर्वदेहिनाम् ।
शिवाय जगतः शान्तं शिवां चापि विशेषतः ॥१ ।

सुखाय बोधशब्दार्थं ग्रंथविस्तरवर्जितम् ।
लक्षणं वाजिदेहस्थं संक्षेपेण यथाक्रमम् ॥२॥

CLOSING — स्वस्थानं चापि तुष्टयर्थं भोजने च प्रदापयेत् ।
त्रिषु दोषेषु जातेषु रक्तोद्रेके तथा व्रणे ॥१२॥

खजे च दुर्बले चैव प्रशस्तः परिकीर्तितः ।

COLOPHON — इति श्रीमद्विजयदत्तकृतायां अश्वचिकित्सायां गुग्गुलुकल्पः समाप्तः ।

इति श्रीजयदत्तकृतं चिकित्साशास्त्रं सम्पूर्णम् ।

## 7430. अश्वसारः

OPENING — ॥ श्रीगणेशाय नमः ॥

देवमणः रोचमान सर्वानिसाः ग्रोरः अकण अकणः यस्यः आवरतः आवरतः ओछीय सुकत फलहेः सुकत्ति-अंतः केसः अंतहसभासः प्रवर्तकः अंगदीः सुबाहू यस्यः द्वो उनमे सपल हेः वेहसोः ललाटे दुस्यः सुभः सरवासख कह्योः रुद्रकोः उरयः यस्यः दप्पणः सचलहे सकतीमेषलारः होनमोहः ठीक करनो हेंः ध्रुवहानिः अतहो-कुफल हे ॥१॥

CLOSING — आरम्भात्पंचरात्रं तु पयःपानं न दापयेत् ।
ततः सकृत्प्रदातव्यं यावत् द्वौ सप्तको गतौ ॥
वा तृतीये सप्तके चैव वाहयेत् तुरग मनाक् ॥
चतुर्थे च तथा शक्त्या वाहयेच्च विचक्षणः ।
पुष्पिताः फलिताश्चैव प्रशस्ताः सर्वदैव तु ॥
···दः श्रवाङ्गी उदेलालस्य धीमतः

Post-Colophonic — १६५१ पोस सुद ६ भौमे यम्यार्थं सालोश्री परसोतमजी ॥

## 7444. गुणशिरोमणिविवरणटीकालंकृत:

**OPENING**

।। श्रीगणेशाय नमः ।।

सकलनृपतिमान्यः सर्वद[ब]ज्ञधन्यः,
सुरविटपिवदान्यः सेवनाद्यस्य नित्यम् ।
भवति जगति लोकः कीर्तिमाप्रम्यमूर्त्तिः,
स जयति गणकेज्यः सद्गुरोः संप्रदायः ।।१।।

ज्योत्पत्तिरस्ति विवृतो बहुभिस्तथापि,
सद्वस्तुसंभ्रमधियः सुधियो भवन्ति ।
तावत् सशेषसविशेषविनिर्णयार्थ—
मर्थोपपत्तिमधुना कथयामि तत्र ।।२।।

शिष्याणां गणितपटुत्वार्थं सिद्धान्तशिरोमणिमुक्ताज्योत्पत्तिज्ञानेन विना आचार्य-पदवी न स्यादिति तेषां ज्योत्पत्तिज्ञानार्थं प्रसंगसंगत्या ज्योत्पत्तिमाह—

**CLOSING**

मल्हारिविष्णुनरसिंहशिवैः प्रवृत्तिः,
श्रीमद्गणेशरचितो गुरुसंप्रदायः ।
तत्रैव भक्तिसदय हृदय न येषां,
तेषां यशो न च कृशोदरतां न याति ।।

गोदासौम्यतरप्रसिद्धनगरं यत्पाथरीसंज्ञितं,
तत्रासीद्गणको विनायक इति ख्यातो बुधैर्वंदितः ।
वेदशास्त्रिपसेवनादधिगतोत्कृष्टप्रतिष्ठस्तु यः,
तत्पोत्रेण विनिर्मिता गुणमणेर्व्याख्यागमत् पूर्णताम् ।।

ग्रंथालङ्कारः समाप्तः ।

Post-colophonic

सं० १६१३ फा० कृ० १४ सोमवार ।

## 7468. आर्यभटी

### (आर्यसिद्धान्तः)

**OPENING**

।। श्रीगणेशाय नमः ।।

वरोजः प्रेरयेत्प्रज्ञां सर्वस्य शशिभूषणम् ।
मृगटङ्काभयेष्टाङ्कं त्रिनेत्रं तमुपास्महे ।।१।।
(टीकामंगलम्)

+ + +

प्रणिपत्यैकमनेकं सत्यां देवतां परं ब्रह्म ।
आर्यभटस्त्रीणि गदति गणितं कालक्रियां गोलकम् ।।१।।
(ग्रन्थकर्तुर्मङ्गलम्)

वर्गाक्षराणि वर्गेऽवर्गेऽवर्गाक्षराणि कात् ङ्नौ यः ।
खद्विनवके स्वरा नव वर्गेऽवर्गे नवान्त्यवर्गे वा । २॥

CLOSING
आर्यभटीयं नाम्ना पूर्वं स्वायंभुवं सदासीद्यत् ।
सुकृतायुषोः प्राणाश कुरुते प्रतिकञ्चुक योऽस्य ॥५०॥

COLOPHON
इत्यार्यभटीयं समाप्तम् ॥

## 7492. उडुदायप्रदीपः सज्जनरञ्जिनीटीकोपेतः

OPENING
श्रीगणेशाय नमः ।

(श्री)मतिमान् प्रणम्य भक्त्या सुहृदां हृत्कमलप्रकाशहेतोः ।
उडुदायोस्य (फल)प्रदीपटीका क्रियते सज्जनरञ्जनी मयैषा ।
पराशरमतागमार्थगहनोदधिक्रोडगा,
शुभाशुभफलावली घनहृतेन्दुबिंबप्रभा ।
पुरातनकथा कथ प्रकथितुं क्षमा धीमंमे-
स्यजस्रमनुधावती न हि न याति पारं यतः ॥

\+ \+

सिद्धान्तमौपनिषदं शुद्धान्त परमेष्ठिनः ।
शोणाधरं महः किंचिद्वीणाधरमुपास्महे ॥

CLOSING
धर्मलग्नाधिनेतारावन्योन्याश्रयसंस्थितौ ।
राजयोगाविति प्रोक्त विख्यातो विजयी भवेत् ॥४३॥
धर्मकर्माधिनेतारावन्योन्याश्रयसंस्थितौ ।
राजयोगाविति प्रोक्त विख्यातो विजयी भवेत् । ४४॥

COLOPHON
समाप्त । सं० १९४१ शाके १८०६ आश्विन कृष्ण १४ गुरुवार ।

## 7517. कालज्ञानम्

OPENING
श्रीगणेशाय नमः ।

पंचसंवत्सरमयं युगाध्यक्ष प्रजापतिम् ।
दिनर्त्वयनमासांगं प्रणम्य शिरसा शुचि ॥१॥
प्रणम्य शिरसा कालमभिवाद्य सरस्वतीम् ।
कालज्ञानं प्रवक्ष्यामि लगधस्य (?) महात्मनः ॥२॥

CLOSING
यथा शिखा मयूराणां नागानां मणयो यथा ।
तद्वद्वेदाङ्गशास्त्राणां ज्योतिषं मूर्धनि स्थितम् ।
वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च[य]ज्ञाः ॥
तस्मादिदं कालविधानशास्त्रं.........

COLOPHON

पंच संवत्सरं प्रपद्यते कार्याः कौला दश च या पर्व सविता विषुवे सप्त इति ज्योतिषं सम्पूर्णम् ।

सं० १६०५ श्रावण शुक्ल ४ गुरुवार ।

## 7597. जातकचन्द्रिका

OPENING

। श्रीअर्हं नमः ॥

विघ्नेशवाणीगिरिजारमेशपादाम्बुजान्येकधिया प्रणम्य ।
आवाप्तसन्नाकिनिकेतसौख्ये श्रीनाकुमातुश्चरणाम्बुजे च ॥१॥

वेदार्थरत्नाकरपारगामी तदुक्तकर्माचरणाभिमानी ।
अस्त्रूतरत्नद्विजपद्मवृन्दप्रकाशसूर्यो हरजिद्विजोऽभूत् ॥२॥

आचाररत्नाकरमन्दराद्रिस्तत्सूनुरासीद् बलभद्रनामा ।
तत्सूनुना याज्ञिकनाथनाम्ना विरच्यते जातकचन्द्रिकेयम् ॥३॥

CLOSING

लग्नं नक्षत्रराशेस्तु वसुभिर्भागमाहरेत् ।
शेष कलादिचक्रंगुणिस्वाष्टशतैर्भजेत् ॥
युक्तं वर्षादिकं ज्ञेय शेष भोग्यं प्रकीर्तितम् ।
शेषमष्टशतं २ तु पात्यं निजचक्रे प्रताडितम् ।
भक्तमष्टशतैर्भोग्यं एवं ज्ञेयं विचक्षणैः ॥

Post-Colophonic

संवत् १७६७ प्र । शाके १६६२ प्र । श्रावण सुदी १५ शनौ दिने श्रीकल्याणचंद्रसूरिणाऽलेखि प्रतिरियम् ।

## 7599. ज्ञानमुक्तावली

OPENING (on f. 2)

.........द्वंमाग: पशुः ।
कीटः कर्कटमीनवृश्चिक इति मार्गायशेषाद्धंकः ॥११॥
व्यातोलिस्तु सरीसृपस्तदनु वा राशिस्वभावोऽग्रिमे,
ग्राम्या मिथुनतुलास्त्री च पलघटा निशासु च ।
वृषमेषौ मकरादिमाद्धं सिहश्चान्यो दिवसे च वृषभौ च जलजौ कर्कटमीनौ मराम्याद्धंञ्च शिवमते च कुंभ: ।

राशिस्वरूपमेतन्मार्कण्डेयादिभिः कथितं ॥१२॥

CLOSING

भूपुत्रो भृगुनन्दनो शशिसुतो सोमो दिनेशस्ततः,
सौम्यौ शुक्रकुजौ गुरोरथ भवेत् प्राभार्किः सूर्यजः ।
जीवो मेषत ईश्वरस्तदनु यः प्रौढाधिनाथो बली,
राशिस्तत्र विशेषतोऽप्यथ सदा षड्वर्गकः कथ्यते ॥१३॥

भूपुत्रभान्वार्किभिरेव सर्वैः सुलस्थिराकाशगतैः क्रमेण ।
तस्यांतकालः क्षितिपालकोपाच्छस्त्राग्निना वा तनुकर्त्तनेन ॥१४॥

शनौ द्वितीये द्विमगौ सुखस्थे मेपूरणे भूमिसुतोथ जन्म ।
यस्यात्र योगे मरणं तदीयं तनुप्रभूतक्षितिकीटजातैः ।।१६।।

सुरवितृतिरञ्चननरकाघोशाः कथितास्तु खेचराः क्रमतः ।
देवेज्यासितचंद्रः सूर्यारौ मन्दशशिपुत्रौ ।।

यस्तु बली शशि सूर्याधिष्ठित वीर्येण अंशाधिपतिः ।।
मरणं नयति च खेटो ये लोका नाम्नी य कालेनापि द्रेष्काणनाथो रिपुरन्ध्रः ।

COLOPHON & Post-Colophonic

इति श्री धनपतिविरचितायां ज्ञानमुक्तावल्यां निर्वाणाध्यायश्चतुर्विंशः ।
सं० १८०५ भाद्र कृष्ण १३ बुधवार ।

## 7719. ताजिकतंत्रसारः

OPENING

श्रीगणेशाय नमः ।

प्रथमं मनुष्यजातको लिख्यते ।
नत्वा गिरां गणपतिमहं वर्गमुख्यं ,
तं कर्मसाक्षिणममलव्ययगुण गुरु च ।
श्रीरिवदिकोवतगुरुताजिकतत्रदीपात् (?) ।
कर्मप्रकाशमगुदीपकमुद्गिरामि ।।१।।

CLOSING

त्रैलोक्यक्षितिपालमौलिसकलव्यापारपारंगमः,
प्राग्वाटान्वयभूर्बभूव सचिवः श्रीचर्डसिहाह्वयः ।
श्रीमान् शोभनदेव इत्यभिजने तस्याभवत्सज्जनः ।
श्रीसामंत इति प्रशातसुमतिस्तस्मादभूदंगभूः ।।१०।।

तस्यात्मजः समजनिष्ट कुमारसिंह-
नामा गुरुर्गणितगीतिरिभाग्रधगेहः ।
तत्सूनुना गणकभूंगसुवेश्मरेणु-
गथोम्बुदे (द्धृतो) ह्रियताजिकपद्मकोशात् ।।११।।

COLOPHON

इति कुमारसिंहात्मजसमरसिंहसमुद्धृते ताजिकतंत्रसारे कर्मप्रकाशिका मनुष्यजातके विंशोध्यायः समाप्तः ।।२०।।

Post-Colophonic

समाप्तमिद नवीनं मनुष्यजातकाख्यं ग्रंथं सम्वत् १९१९ का शाके १९८१ वैशाख कृष्णा १२ वारस्य भृगुवासरे पठनार्थं सूर्यवकस लीखितं मागीलाल वराठी सासन ववेरवाल सवाई जैनग्रमध्ये श्रीलक्ष्मीनारायणजी सदा सहाय ।

## 7720. ताजिकतिलकम्

OPENING

श्रीगणेशपार्वतीभ्यां नमः ।

यः स्वातांबुजकुड्मले कलुषहा नूनं द्विरेफीकृतः,
पर्यंकीकृतपन्नगक्षितिपतिः सत्ताश्रयंवाह्यं प्रभुम् ।

लक्ष्मीलोचनमीनजीवनमलं भक्तामृतार्थप्रदम्,
दैत्यारिं प्रणमामि पूरगणकः सूर्यादिखेटानपि ॥१॥

CLOSING

स्फूर्जत्काश्यपवंशभूषणमलं श्रीदाक्षिणात्याग्रणीः ।
निष्णातः सुजनाङ्घ्रिपद्मयुगलध्यानात्प्रतेनेऽमलम् ।
पंचत्सद्विमलोक्तिसुंदरतरं सांवत्सरीये फलम् ।
लीलाबोध्यमिदं कुबुद्धिमथनं सन्मडलीमडनम् ॥६॥

COLOPHON

इति श्रीमद्दैजनाथसुतकृष्णज्योतिर्विदविरचितताजिकतिलकाभिधाने तत्कालवीर्यनिर्णयाध्यायः ॥ समाप्तमिदं ताजिकतिलकम् ॥

Post-Colophonic

स्वस्ति सम्वत् १६०१ वर्षे पौष शुदि सोमे ग्रद्येह ग्रहिमदाबादवास्तव्य-वैश्यवर-श्रीनाभाजोसूनुना गदाधरेण वृद्धभ्रातुर्मंत्रिश्रीश्रीबलिराजस्य विलोकनाय तथा तत्पुत्रादीनां विलोकनायेदं ग्रन्थताजिकतिलकं भृगुकच्छक्षितौ सत्या लिखितमिति भद्रं श्रीगणेशलक्ष्मीनाथप्रसादात् शुभं भवतु ॥श्रीरस्तु ॥

## 7832. पद्मलीलाविलासिनीकरणम्

OPENING

ॐ श्रीसूर्याय नमः ॥

नत्वा गणेन्द्रगिरिजापतिमाधवादीन्,
विध्यम्बिकादिनकरादिनवग्रहांश्च ।
श्रीनागशर्मगणकः स्फुटखेटकर्म्म,
वक्ष्याम्यहं गणकवल्लभनामशास्त्रम् ॥१॥

गजाब्धिवाद ४४८ कोष्टकाब्धिनयः कृताक्षवह्नयः २५४,
ग्रहाग्निवादसंख्यया ४३९ भभागयोः क्रमादमी २ ।
शिलीमुखांगवह्नया ३६५ वधिस्वाकाष्टकारवः ,
कलादितो धनर्णकं जगुः······ ······ ····॥

CLOSING

प्राप्तं स्थितिघटीस्वेष्टकालोद्धिरयुतो युतः ।
ततस्स्पर्शकालो च मध्यस्वेष्टघटीषु वै ॥ ११ ॥
ग्रहले··········गडाते न युतः पुनः ।
त्रिसंगुणोज्वलत्कालः शुभः पुण्येन मगलै ॥ १२ ॥

COLOPHON & Post-colophonic

इति श्रीपद्मलीलाविलासिन्यां पाता········ श्रीमत्पंडितनारायणकृतपद्मलीलाविलासिनीकरणग्रन्थः समाप्तिमगमत् ।

नागाब्धिशैलेन्दुमिते च[वर्षे]ते·········मारगुरौ लिलेख ।
तदस्तु बोधां किल·········पद्मविलासिनी वै गुरुदासनामा ? ॥

## 7840. प्रबोधसुधाकरः

OPENING

श्रीहरिः ।

ॐ नित्यानंदैकरूपं सच्चिन्मात्रं स्वयंज्योतिः ।
पुरुषोत्तममजमीशं वंदे श्रीयादवाधिशम् ॥१॥

CLOSING

परोपकारार्थमुदाहृतेन यद्वा विसर्गेण रसोज्वलेन ।
शब्दाभिधं ब्रह्म यतः प्रवृत्तं सप्रीयतां यादवसिंहराजः ॥११॥

COLOPHON

इति दैवज्ञसूर्याभिधकृतः प्रबोधसुधाकरः समाप्तः ॥२०॥

श्री ॥ श्री ॥ श्री ॥

## 7917. मुहूर्तकल्पद्रुमः

OPENING

श्रीगणेशाय नमः ॥ श्रीगुरुभ्यो नमः ॥ श्रीमंगलमूर्तये नमः ।

दन्तावलालपन इंदुकलावतंसः प्रोद्यन्मदांबुलुलितालिलसत्कपोलः ।
देवः स मेऽस्तु हृदि येन हृदि स्थितेन वाचस्पतेरपि तुलां जडधीः प्रयाति ॥१॥

शम्भोः करेण फणिमंगलकंकणेन वैवाहहोमसमये दृषदि प्रयुक्तम् ।
रत्नांगुलीयरुचियावरसानुलिप्त गौरीपद प्रतिपदं मम सम्पदेऽस्तु ॥२॥

CLOSING

चिन्तारुजोत्थ: कफवातपित्तप्रकोपजातश्च वृथा भवेत्सः ।
विप्रो वदेत्संस्तवमेवमेनं नैवोच्चरेत्तत्र जपेन्मुरारिम् ॥१६॥

\+ × +

नानाफलाढ्यैः कुसुमै [र्व सभृतः] कल्पद्रुमः कल्पितवस्तुदायी ।
आकल्पमाकल्पविभूषितानां गेहेऽस्तु नित्यं विबुधप्रियानाम् ॥३॥

COLOPHON & Post-colophonic

इति श्रीविट्ठलदीक्षितविरचित मुहूर्तकल्पद्रुमं समाप्तम् ॥ शुभ भवतु ।

यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥१॥

सम्वत् १८६६ आश्विनकृष्णसप्तम्यां गुरुवासरे पूर्णीकृतमिदं पुस्तकं श्रीरस्तु । कल्याणमस्तु ॥ शुभं भूयात् ॥ सवाई जैपुरमध्ये ।
श्रीविश्वेश्वरजी प्रसादात् ॥ श्रीरामचंद्राय नमः । श्री राधावल्लभाय नमः ॥
श्रीकृष्णाय नमः ॥ श्री ॥ श्री ॥ श्री ॥ श्री ।
ग्रंथ संख्या अनुष्टुब्छन्द १८७४ पाना २१६६५

## 7945. मुहूर्त्तमणिः

OPENING

श्रीगणेशाय नमः ॥ महादेवजी सत्य छे ॥

नमामि गोवर्द्धनसंभुनाथं विश्वेश्वरीमीशमृतं च धाता ।
सूर्यादिकान् सर्वग्रहान् प्रणम्य कृतो मया मुहूर्तमणिश्च रम्यः ॥१॥

CLOSING

व्योमतुरंगप्रतिषलशाके मासे तु चैत्रस्य च कृष्णपक्षे ।
तिथौ द्वितीया गुरुवासरेण समग्रग्रथः सुखिना विधत्ते ॥१२०॥

COLOPHON

इति श्रीज्योतिषीविदवनाथविरचितं मुहूर्तमणिः समाप्तम् ॥

Post-Colophonic

श्रीरस्तु । सम्वत् १६१६ वर्षे कातिकवदी ३० शुके भट शंभजीसूत श्रीकृष्ण लेखक व्यास उदेराम सेवकराम ॥

महादेवजी सत्य छे । श्रीरस्तु । कल्याणमस्तु ॥ श्रीगणेशाय नमः । अंबाजी सत्य छे ॥

## 7954. बालविवेकिनी

OPENING

+ + + + रं देशपुराधिनाथं शेषेषूभद्रं सरुजं दरिद्रम् ॥१॥
अन्यालयस्थो व्यसनाभिभूतो जनोज्झितः स्यात् मनुजश्च पश्चात् ।
देशान्तरे वाहनराजमानो धनाभिधाने भवनेऽर्कसूनो ॥२॥

CLOSING

अथ राशिस्वामी—
मेषवृश्चिकयोर्भौमः शुक्रो वृषतुलाभृतः ।
बुधः कन्यामिथुनयोः कर्कमीनस्य चन्द्रमाः ।
धनुर्मकरयोर्जीव. शनिः मकरकुम्भयोः ।।
सिंह सूर्यं विजानीयात्प्रोक्ताश्च गुरुराशयः ॥१॥
इति राशिस्वामी ज्ञेयं ।

## 7978. ज्योतिषरत्नचूडामणिः

OPENING

श्रीगणेशाय नमः ॥

अथ गुरु तथा भृगुविचार ॥
प्रागुक्तः शिशुरहसितः स्यात् पश्चाद्दशाहमिह यं च दिनानि वृद्धः ।
प्राक्पक्षमेव कथितोऽत्र वसिष्ठमुख्यैर्जीवस्तु पक्षमपि वृद्धशिशुविवर्जम् ॥१॥

CLOSING

कालांशतुल्यानि दिनानि चंके सप्ताहमन्यं तु परे त्रिरात्रम् ॥१॥

जीवे भार्गव आस्तगेप्यथ शशी वक्रातिचारो यदा,
नीचस्थे यदि काकरे धनगते मीनार्कयाम्यायने ।
वैधृत्ये व्यतिपातशूलविष्टिकर्णे जाते मृते सूतके,
सिंहांते शुभकर्म सर्वरहित आरम्भदोषो नहि ॥२॥

COLOPHON

रत्नचूडामणिग्रंथः समाप्तः ॥ लषित हो ॥६०॥

Post-Colophonic

गवरीशंकर वैजनाथ ॥ ब्रह्म दिशावाल ॥ श्रीरस्तु ॥

## 8060. सुखबोधः

OPENING

श्रीगणेशाय नमः ॥

प्रणम्य श्रीभवानीं च महिषासुरमर्दिनीम् ।
करोति सुखबोधाख्यं मुहूर्तं सारसंग्रहम् ॥१॥

सन्ति ग्रन्था बहुतरा दुर्बोधाः शब्दविस्तराः ।।२।।
ग्रन्थोऽयं बालबोधार्थः सुबोधः शब्दविस्तरः ।
सुखबोधः कृतो ग्रंथः शालिवाहनजन्मतः ।
सम्वत्सरे विक्रमाख्ये नेत्रवेदाश्वभूमिते ।।३२३।।
शाके रसाब्धिसप्तेंदौ १६४६ तारणाब्दे च कार्तिके ।
सुखबोधमिमंग्रन्थ तर्प्पणार्थं सुखेखितम् ।।१।।

लिपि । सदारामस्यात्मार्थे सं० १८८६ सा० ब्द १०

Post-Colophonic

## 8181. जातकामृतप्रकाशः

श्रीगणेशाय नमः ।

OPENING

सं० १५१३ शाक १३७८ आषाढ कृष्ण १२ घटी ६।४ भरणी ५८।६ सुकर्मा १४। ४२ सोमवासर तत्र मिथुनसक्रान्तेस्तृतीयदिवसे स्फुटो रविः २।२।४५।४४ अयनांशाः १४।१८ सायनोर्कः २।१७।७।२ अस्मात्सूर्यसिद्धान्तोक्तप्रकारेण ग्रहोदयेस्यादिनानीतं चरार्द्धं १।५६ दिनार्द्धं १७।२ निशार्द्धं १३।३............

CLOSING

क्रान्तिसौम्यात्त्वमिह परमापक्रमे दक्षिणाणोमिति ।
परमापक्रमप्रमाणमुक्तं सिद्धान्ते—
परमापक्रमज्या तु सप्तरंध्रगुणेंदवः ।
१३८७ तद्गुणा ज्या त्रिजीवाप्ता तच्चापक्रांतिरुच्यते ।।
इत्यनेन परमापक्रमज्या चापीकृता ।।

## 8194. द्वादशभावक्रमः

श्रीगणेशाय नमः ।

CLOSING

अथ द्वादशभावानां विचारः क्रियते ।।
गणाधीशं गुरु देवीं नत्वा रविमुखान् ग्रहान् ।
वक्ष्ये शास्त्रानुसारेण भावानां लेखनक्रमम् ।।१।।

CLOSING

एवं ग्रहस्वरूपं राशिस्वरूपं विचार्य बुद्धिमद्भिर्लेखनीयम् । व्ययभावे स्थितो यो ग्रहस्तस्य राशिफलं भावफलं भावेशफलं च लेखनीयम् ।

COLOPHON

इति द्वादशभावस्य लिखानुक्रमं ।।
श्रीविक्रमात्खाद्रिमुनींदु १९७० [सं]मिते शुचौ सिते पंचमितार्कवारे
श्रीकाह्नजित्सूनुत्रिविक्रमेण भावक्रमोऽयं लिखितः सुखार्थः ।।१।। श्रीः ।।
इति श्रीमट्टकाह्नजितात्मजत्रिविक्रमेण कल्पितं भावानुक्रमं संपूर्णम् ।।

Post-Colopohnic

सम्वत् १९७० वर्षे आषाढ प्रथम सुदि ५ रविवासरे उपाध्यायश्रीज्ञानमेरोरन्तेवासी सुमतिमेरुः तच्छिष्येन कृत्स्वात्मार्थे कल्पयित्वा लिखितं ।।श्रीरस्तु।।

## 8261. काकरुतविचार:

OPENING ॥६८॥ प्रणिपत्य महादेवं नमस्कृत्य जिनेश्वरम् ।
वायसानां रुत वक्ष्ये यथा गर्गेण भाषितम् ॥१॥
लोकाना हितार्थाय सद्यः प्रत्ययकारकम् ।
मंग(ड)लं र(च)तुष्कोण गोमयेनानुलपनम् ॥२॥

CLOSING इह लोमद्विएरलोग जो समरेइ वासनाहेतु ततो सिज्झइ नक्को संइनाहुस्करा भगवंत ॥११॥

COLOPHON इति श्रीभद्रबाहुस्वामीप्रसादात् एष योग: फलतु ॥ लिखितंम ॥

Post-colophonic लहिया वनमाल्ली ॥ जेटमल ॥ मु० नागौर ॥ मारवाड़ ॥ संमत् १६६८ का मिती पौष वदी ११ वार मदीतवार। ॥ श्री ॥ श्री ॥ श्री ॥ श्री ॥

## 8397. विजयप्रकाश:

OPENING श्रीगणेशाय नम: ॥

नत्वा श्रीनरसिंहदेवचरणांभोज गणेश गिरम्,
सूर्यादिग्रहमंडलं च स्वरशास्त्रानेकधा वीक्षिता ।
वक्ष्ये सद्विजयप्रकाशमखिल राज्ञा जयार्थं सताम्,
सद्विद्यां गुरुभक्तिमान् पठति य: प्राप्नोति सिद्धि पराम् ॥१॥

CLOSING कृतातकुजयोर्वारे जन्मर्क्षे यदा भवेत् ।
समास: कल्पको नाम मनोदु:खप्रदायक: ॥१॥

## 8399. विद्यालग्नपद्धतिः

OPENING ॐ नम. सारदायै ॥

सद्यस्फुरयणपकयनिवासिणि पणमिऊण भुयदेवि ।
धम्मायति वग्गजुय मुयणाण सुहासिय बोध ॥१॥
विवहकद्रविरद्रयाद्रि गाहाणं बहुकुलाद्रिपेत्तूण ।
रच्चयं विद्यालग्न विहिण जयवल्लहं नाम ॥२॥

CLOSING उद्दरि उरडियं जलनिलयनिवाससद्सुक्तिजुण ।
धारसुएदिरन्न हरहारम्राहारवाहणानयणी ॥४॥
एबिपहियालि वमि छप्पयाछल्लर निधयरछ ।
तसिउणाकविदीहा पुण विजा जत्रसातवे ॥ शुभं भवतु ॥

COLOPHON विद्यालग्नं सम्पूर्णम् ॥

## 8473. पाण्डित्यदर्पणः

OPENING

श्रीगणेशाय नमः ।

यस्य ज्ञानदयासिन्धोः प्रसरो: विश्वपूरुषाः ।
भवन्ति विबुधा भूमौ त वन्दे परमं गुरुम् ॥१॥

भगवति गुरुदेवे नमस्कृते सर्वे देवा नमस्कृताः स्युः । यदुक्तं श्रीभागवते-
आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ।

CLOSING

चतुर्थे प्रकाशे वासुदेवशब्दभाक्श्रीकृष्णरावनबलदेवइत्युक्तिमुद्दिश्य लिखनं ॥१॥ पंचमे प्रकाशे रामनवमीनिर्णयः । षष्ठे प्रकाशे श्राद्धनिर्णयः ॥ सप्तमे प्रकाशे मेट इति सूत्रस्य निर्णयः ॥ अष्टमे प्रकाशे नपुंसी शब्द निर्णयः ॥४॥ मंगल्याशब्दनिर्णयः ॥५॥ आर्याणीशब्दनिर्णयः ॥६॥

## 8474. पुरुषोत्तमदासकविकुलकान्तसिद्धान्तः

पुरुषोत्तमदाससिद्धान्ते ज्योतिः शास्त्र प्रकाशितम् लिख्यते ।

प्रणतिकृतिसमस्तशास्त्र हेतुर्व्यसनमहार्णवतारणैकसेतुः ।
जगदवनसमाप्तिसर्वशाली घटयतु मंगलराशिमंशुमाली ॥१॥

CLOSING

वृक्षगुल्मलतावल्यस्त्वक्सारास्तृणजातयः ।
कीर्तिश्च मानुषे लोके प्रेत्य चैव फलं शुभम् ॥

# ERRATTA

## Tables

| Page | Column | Incorrect | Correct |
|---|---|---|---|
| 9 | 11 | Devaksna Dave | Devakrsna Dave |
| 10 | 4 | Vasiṣtha Maharṣi | Vasiṣtha Maharṣiḥ |
| 33 | 11 | Santkumāra-saṁitā | Santkumāra-saṁhitā |
| 53 | 11 | Ekas'loki-dūrgā | Ekas'loki-durgā |
| 59 | 11 | Ganes's | Gaṇes'a |
| 66 | 4349/4 | | Delete-,, |
| 125 | 11 | Svāirāma | Savāirāma |
| 127 | 11 | Sāradānandana | S'āradānandana |
| 147 | 11 | Sādarī | Sādaḍi |
| 150 | 3 | -Kilakāki | -Kilakādi |
| 157 | 11 | Only illustration | Illustration only |
| 186 | 3 | S'rīkrṣṇāuṣṭakṣara- | S'rīkṛṣṇāṣṭākṣara- |
| ,, | ,, | Sannyāsa- | Sanyāsa- |
| ,, | 5 | Raghunātha Cakravart | Raghunātha-cakravartī |
| 212 | 3 | Candī-navārṇava- | Candī-navārṇa- |
| 216 | 3 | Pūrvasodha-nyāsa- | Pūrṇaṣodhā nyāsa- |
| 234 | 3 | Nityārādhan-paddhati | -paddhatiḥ |
| 239 | page no. | 339 | 239 |
| 257 | 11 | Prahmānanda | Brahmānanda |
| 265 | 11 | Nārāyanapura | Nārayaṇapura |
| 286 | 4 | Ānandavardhana | Ānandavardhanaḥ |
| 292 | 3 | adāṅka-dūtam | Padanka-dūtam |
| ,, | ,, | Pras'nottaraikasasti- | Pras'nottaraika-ṣaṣti- |
| ,, | 4 | Nyāyavācaspatiḥ | Rudra nyāyavācaspatiḥ |
| 298 | 3 | Rāmārvā-stavah | Rāmārya-stavaḥ |
| ,, | 5 | Jñāna | Jñānaḥ |
| ,, | ,, | Vis'alarajaḥ | Vis'alarājaḥ |
| 299 | 11 | विधोदिने | विधोदिने |
| 303 | 11 | Bhavanagar | Bhāvanagara |
| 309 | 11 | Viras'ekhara Gaṇil | Viras'ekhara Gaṇi |
| 310 | Page no. | 210 | 310 |
| ,, | 4 | S'rīpaṇaḥ | S'rīkaṇaḥ |
| 312 | 3 | radyumna-vijaya-nāṭakam | Pradyumna-vijaya-nāṭakam |
| ,, | ,, | Candraprabhā-n ṭikā | Candraprabhā-nāṭikā |
| ,, | ,, | Jivānanda-n ṭakam | Jivānanda-nāṭakam |

| Page | Column | Incorrect | Correct |
|---|---|---|---|
| 312 | 4 | Āpadevaḥ | Āpadeva |
| 314 | 2 | 12562 | 16562 |
| 316 | 5 | Sāmarāya Rānade | Sāmarāya Rānāde |
| 318 | 5 | Jagaddhara-Mahāmaho-pādhyāya | Jagaddhara-Mahā-mahopādhyāyaḥ |
| 324 | Page no. | 224 | 324 |
| 334 | 5 | Jnānendra- | Jñānendra- |
| 336 | 5 | Nandi-Panditaḥ | Nandi-Pandita |
| ,, | ,, | Caritrasiṁha- | Cāritrasiṁha- |
| 348 | 3 | Dantyoṣtha- | Dantyoṣṭhya- |
| 351 | 11 | s'ānticandra | S'ānticandra |
| 371 | 11 | S'rīvas'armā | S'ivas'armā |
| ,, | ,, | Udaya ilaka | Udayatilaka |
| 378 | 3 | Aparājitāprcchā | Aparājitapṛcchā |
| 386 | 4 | Siddhes'varācāryaḥ | Siddhes'varācārya |
| 398 | 3 | Pathyāpatha- | Pathyāpathya- |
| 406 | 3 | Vandāka-kalapaḥ | Vandāka-kalpaḥ |
| 408 | 1 | 89 | 7389 |
| 416 | 5 | Vires'varaḥ | Vires'varaḥ |
| 418 | 7470/4 | | Bhaskarācāryaḥ s/o Mahes'vara |
| 440 | 3 | Jyotiṣa-prakirnāms'ah | Jyotiṣa-prakirnams'aḥ |
| 446 | 7718/4 | Kṛṣna-Daivajñaḥ s/o Vaijanatha | Delete |
| ,, | 7720/4 | Kumārasiṁhaḥ s/o Samarasiṁha | Kṛṣna-Daivajñaḥ s/o Vaijanatha |
| ,, | 7721 to 7728/4 | | Govarddhanaḥ s/o Rama |
| 448 | 7729-7730/4 | | Govarddhanaḥ s/o Rama |
| ,, | 4 | Ṭājikaphalam | Tajikaphalam |
| 450 | 4 | Khokhana Dvija | Pagana Dvija |
| 457 | 11 | Dungaramalla | Duṅgaramalla |
| 459 | 11 | Manāsiṁha | Manasiṁha |
| 486 | 4 | alabhadra | Balabhadra |